आकर्षणं महादेवि जम्भनं[1] स्तम्भनं तथा ।
व्याधिदारिद्र्यशमनं सर्वदुर्नीति[2]नाशनम् ॥ ४४ ॥

हृदि परिरूढमेतच्चक्रं साधकस्य तत्तत्फलाकाङ्क्षया तत्र तत्र तथा तथा भावितं तत्तत्कामं[3] साधयतीत्याह—क्लेदनमित्यादि । क्लेदनं[4] साध्यविषये[5] तत्तत्प्रयोजनानुगुण्येन ध्यातं क्लेदयतीति । एवं द्रावणादयः । जम्भनम्

मयमिति । न केवलमभिव्यक्तिस्थानीयमिदं चक्रमित्येतावत्[6], किन्तु महच्छब्दलक्षितायाः श्रीत्रिपुरायास्त्रिपुरी[7]कृतायाः परं[8] विग्रहरूपमेवेदं चक्रमित्यर्थः । क्लेदनम् । क्लेदयति समस्तं जगदिति क्लेदनम् । कोऽर्थः[9] ? सर्वप्राणिनामन्तश्चिच्चन्द्रमण्डलतया ब्रह्मरन्ध्रान्तः प्रविश्य परामृतास्रावरूपेण शिवादिकालाग्न्यन्तं जगदाह्लादयतीत्यर्थः । पातालादिष्ववर्ती[10]र्णानां सर्वासां सुन्दरीणां विक्षोभकमित्यर्थः । द्रावणं चेति । द्रावयति[11] समस्तं जगदिति द्रावणम् । ब्रह्माण्डकुहरान्तश्चारिपरि[12]रितसानुग्राह्यजीवराशीनां कल्याणदेशिककटाक्षवीक्षणवशात् कालानलमाविश्य दक्षिणावर्तवातचक्रविक्षोभवशात् तडित्कोटिज्वालाजटिलमहाकुण्डलीवलयपरिवेष्टितोर्ध्व[13]मार्गचटुलचारचतुर[14]मान्ब्रह्मविलोकनोत्सुकमिदं चक्रं निखिल[15]पाशजालं द्रावयति विलापयतीत्यर्थः । अथवा समस्तसुरासुरसुन्दरीमदन[16]मन्दिरान्तः परिचिन्तितमिदं चक्रं द्रावयतीति । कोऽर्थः ? मदनमन्दिरारविन्दस्यन्दिमकरन्दमहामदवारिसरित्[17]प्रवाहप्रवर्तकमिदं चक्रमित्यर्थः । क्षोभणं चेति । क्षोभयति समस्तं जगदिति क्षोभणम्[18] । समस्तसुरासुरयक्षराक्षसगन्धर्वाप्सरोगणब्रह्मविष्णु[19]रुद्रेश्वरसदाशिवादिपरिपूरितमिदं दहराकाशकुशेशयकोटरान्तः प्र[20]स्फुरन्महाचक्रकालानल[21]प्रभा[22]च्छटानिबिडीकृतदक्षिणावर्तवातचक्रप्रक्षोभितं स्वान्तश्चिन्त्यमानं

१. जृम्भणं—वाग. से. । २. दुःस्वाति—अ. सख., दुर्गति—सक. । ३. कर्म—ख. ग. । ४. 'क्लेदन' नास्ति—ख. । ५. वाग्भवविषये—ख. । ६. 'इत्येतावत्' नास्ति—क. ग. घ. ज. । ७. महात्रिपुरसुन्दर्या—ख. ङ. ज. । ८. परा—घ. । ९. 'कोऽर्थः' नास्ति— क. ग. छ. । १०. व्यन्तर्वर्तिनी—ख. घ. ङ. ज. । ११. 'द्रावयति' नास्ति—क. ग. छ. । १२. 'परि' नास्ति—क. ग. । १३. तमूर्ध्वं—ख. घ. ङ. ज. । १४. चतुरस्रा—ग. छ. । १५. प्राणिपाश—क. ग. छ. । १६. 'मदन' नास्ति—क. ग. छ. । १७. 'सरित्' नास्ति—क. छ. । १८. क्षोभणं संक्षोभणम्—ख. ङ. ज. । १९. 'विष्णु' नास्ति—ख. छ. । २०. 'प्र' नास्ति—क. ग. छ. । २१. कल्पा—ख. ङ. ज. । २२. 'प्रभा' नास्ति—ख. ङ. ज. ।

आवर्जनम्। स्तम्भनं निश्चेष्टी[1]करणम्। [2]व्याधिदारिद्र्यशमनमिति। व्याधिरपूर्णम्मन्यतात्मा संकोचः। दारिद्र्यम् अज्ञानम्। [3]यदाह भट्ट[4]गङ्गाधरमिश्रः—

अपूर्णम्मन्यता व्याधिः कार्पण्यैकनिदानभूः।
क्लेशावहो[5] जुगुप्स्य[6]श्च सर्वधर्मबहिष्कृतः॥
आनन्दकणभिक्षार्थं[7] शब्दस्पर्शादिपक्कणे[8]।
अटत्यविरतं येन तद्दारिद्र्यं विदुर्बुधाः॥ इति।

---

जगत् क्षोभयतीत्यर्थः। आकुलं करोतीति यावत्। मोहनं तथेति। पूर्वोक्तदहराकाशान्तश्चक्रमध्यवह्निसन्तापशिथिलीकृ[9]तमनोवारणानां साध्यवृ[10]न्दानां मोहनं भवति। प[11]रवशीभावं नयति स्वमध्यस्थानित्यर्थः॥ ४३॥

आकर्षणमिति। चक्रमध्यस्थितत्वेन चिन्तितमाकर्षयति। जृम्भनमावर्जनम्। स्तम्भनं निश्चेष्टीकरणम्। व्याधिदारिद्र्यशमनमिति। व्याधिः स्वरूपापरिज्ञानम्, तन्मूलत्वाद्बाह्याभ्यन्तरक्लेशानाम्। दारिद्र्यं स्वस्वरूपाला[12]भः। शमनं स्व[13]विमर्शपराहन्तेश्वरस्वरूपोल्लासप्रदर्शनेन परिपूर्णप[14]राद्वयानन्दात्मप्रकाशनेन च[15]। तदुभयं प्रणाशयतीदं चक्रमित्यर्थः। अ[16]थवा व्याधयो राजयक्ष्मादयः, दारिद्र्यं रिक्तता, तदुभयम[17]पि स्मृतिमात्रेण प्र[18]णाशयतीदं चक्रमित्यर्थः। सर्वदु:खार्तिनाशनमिति। अतीतानन्तजन्मोपात्तकल्मषवशादेकमपि दुःखं बहुधा भवति[19], अर्थपुत्रकलत्रलोभनिमित्तवशात्। तस्य सर्वदुःखस्य नाशनं तत्तदि[20]ष्टसार्थप्रकृष्टसम्पत्प्रदानेनेति। आर्तिरिति क्लेशः, आध्यात्मिकाधिदैविकाधिभौतिकत्रिविधोऽपि। आध्यात्मिकस्तु वा[21]युपित्तश्लेष्मादीनां प्रकोपसंभवः। आधिदैविकस्[22]त्वतिवृष्ट्यादिदेवताप्रकोपसंभवः। आधिभौतिक[23]श्चोरव्याघ्राप-

---

१. ष्टित–ग.। २. व्याधिरित्यपूर्णम्मन्यतात्मकसंकोचः–ख.। ३. 'यदाह…मिश्र.' नास्ति–ख.। ४. गङ्गाधर–ग.। ५. निवेशनम्–ख. ग.। ६. होऽतिकष्टश्च–ग. दी.। ७. प्सा च–दी.। ८. णम्–क.। ९. 'कृत' नास्ति–क. ग. छ.। १०. वृन्दारकाणां–क. ग. छ.। ११. परमशिव–ख. ङ. ज.। १२. भाव.–ख. ङ. ज.। १३. स्वाधीनत्वं–क. ग. छ.। १४. परात्माहन्ता–ख. ङ. ज.। १५. 'च' नास्ति–ख. ङ. ज.। १६. 'अथवा…मित्यर्थः' नास्ति–ग.। १७. 'अपि' नास्ति–क. ग. छ.। १८. प्रदर्श–क. ग. छ., प्रशम–घ.। १९. तीत्यर्थः। पुत्र–घ.। २०. ष्टार्थ–ख. ङ. ज.। २१. वात–ङ. ज.। २२. स्त्ववृष्ट्या–क. ग. छ., स्तु परमेश्वरा–ख. ङ. ज.। २३. कस्तु अपस्मारा–ख. घ. ङ. ज.।

शान्तिपुष्टिधनारोग्यमन्त्रसिद्धिकरं परम् ।
भोगदं मोक्षदं चैव खेचरत्वप्रवर्तकम् ॥ ४५ ॥

---

सर्वदुर्नीतिनाशनम् । सर्वासां दुर्नीतीनां नाशनम् । उपासकान् सन्मार्गे स्थापयतीति भाव । यच्छ्रुतिः—"सुनीतिभिर्नयसि त्रायसे जनम्" ( ऋ० २।२३।४ ) इति ॥ ४३-४४ ॥

शान्तीति । अत्र करशब्द प्रत्येकमभिसम्बद्धयते । शान्तिकरमित्यादि । परं सर्वोत्कृष्टम् । भोगदं भोगार्थिनाम् । भोगश्चमत्कार । मोक्षदं मोक्षार्थिनाम् । चित्तकल्मषनिवृत्तिद्वारेण ज्ञान प्रयच्छतीति भाव. ।

---

स्मारादिभूतप्रकोपमभव । एव त्रिविधानामप्यार्तीनां स्मृतिमात्रेण प्रशम करोतीद चक्रमित्यर्थ. ॥ ४४ ॥

शान्तिपुष्टिधनारोग्येति । शान्तिकर समस्तविघ्नोपद्रवप्रशमकरमित्यर्थ । पुष्टिरिति समस्तसम्पत्समृद्धि, तामप्यस्मै साधकाय ददातीति पुष्टिकरम् । अर्थानां सचयो धनम्, तदस्मै ददातीति धनकरम् । आरोग्य जाठरजातवेदसो दीपनादिद्वारेण देहपीडाभाव, तत्करोतीत्यारोग्यकरम् । मन्त्रसिद्धिकर मन्त्राणा सिद्धिर्मन्त्रसिद्धिस्ता करोतीति मन्त्रसिद्धिकरम् । मन्त्रा आणवाद्युपायसर्वेन्धिनस्तेषा सिद्धि शक्तिचक्रोच्चारणेनैव संभवति नान्यथेत्यर्थ । तथा चोक्त शिवनोत्तरपटकर्पे—

यद्यदुच्चरते मन्त्री मन्त्रवर्णं शुभाशुभम् ।
तत्तत्सिद्धयति देवेशि योनिमुद्रानिबन्धनात् ॥ इति ।

भोगदं भोग ददातीति भोगदम् । भोगस्तु द्विविध —ऐहिक, आमुष्मिक इति । ऐहिकस्तु स्रक्चन्दनवनितादि । आमुष्मिकस्तु इन्द्रनन्दनोद्यानमध्यस्थितकेलिशैलदरीषु सरभसमदनमृदङ्गवेणुवीणामर्दलकाहलादिदिव्यध्वनिपरिबृंहितैस्तुम्बुरुनारदप्रमुखसिद्ध-

---

१. बत्ता—च । २ स्तुनिभि—क । ३. गच—ग । ४. कलुष—ग । ५. पालव—ग. घ ङ । ६. तास्यप—क. ग. छ । ७. त क—ख. घ. ङ. ज. । ८. 'मन्त्रसिद्धिकर' नास्ति—क ग. छ. ज । ९ गमवा—क ग छ. । १०. वर्गस्प—क. ग. घ. ङ. छ ज. । ११. देवेन—ग, योग हि—घ । १२ भोगदमिति—क. ग. छ । १३. 'मु' नास्ति—क. ग. । १४. रस्य—ग. ङ. । १५. पस्र—ग. घ. ङ. ज. । १६ सुन्द—क. ग छ. ।

सर्वरक्षाकरं देवि सर्वानन्दकरं तथा[3]।
सर्वकर्मकरं चापि सर्वकार्यार्थसाधकम्[4] ॥ ४६ ॥

खेचरत्वप्रवर्तकं विद्याधरराद्याधिपत्यप्रवर्तकम्[5]। सर्वरक्षाकरं शस्त्रसलिलाग्नि-राजचोरवातादिभ्यः सर्वेभ्यः। सर्वानन्दकरं तत्तद्भुवनतत्तदाधिपत्यद्वारेण। सर्वकर्मकरं वश्यादीनि कर्माणि साधकस्य करोति। सर्वकार्यार्थसाधकं

---

गन्धर्वोपगीयमानदिव्यगीत[9]परि[10]पूरितश्रवणविवराभिर्नवनवप्रवृद्धरागसागरनिमग्नमान-साभिः प्रियजनहृदयविदारणप्रवीणनिशितकुसुमशरसदृशनयननलिनाभिः कलरणित[11]म-णिगणाद्यनेका[12]कल्पकल्पितालङ्कारललिततनुलताभिरमरवि[13]लासिनीभिरविरतविनोदनम्। ए[14]तदुभयं स्मृतिमात्रेण ददाति। ऐहिकामुष्मिकनिरीहचेतसः परमयोगिनः पु[15]नः पञ्च-शक्तिचतुर्वह्न्यात्मकदेहमहापीठे प्रकाशविमर्शम[16]यीं परमानन्दलक्षणां स्वात्मदेवतां त्रिपुरसुन्दरीमनुसन्दधानस्य परमशिवसामरस्यपरमभोगं प्रयच्छतीत्यर्थः। मो[17]क्षदं चेति। जीवन्मुक्तिं प्रयच्छतीत्यर्थः। इदन्ताभरितस्य कृत्रिमाहंस्वरूपस्य जीवत एव जप्तृकर्तृ-स्वभावपराहं[18]भावभावनात्मकविमर्शानन्दलक्षणस्वस्वरूपाभिव्यक्तिं करोतीत्यर्थः। खेच-रत्वप्रवर्तकमिति। खे चिन्मये पराकाशे तत्र चारित्वं समरसता खेचरत्वम्। अथवाऽ-णिमाद्यष्टसिद्धिसमन्वितः सदा सृष्ट्यादिपञ्चकृत्यकारी स्वे[19]च्छागृहीतविग्रहः स्वच्छन्द-चारी महाभैरवदशामापन्नः खेचरीभिरेवंगुणविशिष्टाभिश्चतुष्षष्टियोगिनीभिः सं[20]चरन् क्रीडमानः खेचर इ[21]त्युच्यते। तथात्वप्रवर्तकमिति यावत् ॥ ४५ ॥

[22]सर्वरक्षाकरं चेति। सर्वतः शस्त्रवह्निरोगादिभ्यः स्मर्तुः साधकस्य रक्षां करो-तीत्यर्थः। अथवा [1]सर्वेषां समयनिष्ठानां समयच्युतिसंभवाद्यनिष्टेभ्यो रक्षतीति यावत्।

---

१. घेय–सख. । २. परम्–च. । ३. देयि–सफ. । ४. नम्–सघ. । ५. राधि–क. स. । ६. ग्निवातराजचोरादि–ख. ग. । ७. दिक–क. । ८. करोनोति–ख. ग. । ९. गीति–ख. ट. । १०. 'परि' नास्ति–क. ग. । ११. मणित–ख. घ. । १२. 'आकल्प' नास्ति–क. ग. छ. । १३. निधा–ख. ज. । १४. एवमु–ड. । १५. 'पुनः' नास्ति–ख. ड. ज. । १६. मयीमात्म-देवतां त्रिपुर–ख. ग. छ. । १७. 'मोक्षदं···तीत्यर्थः' नास्ति–ख. ग. घ. छ. । १८. हंभावात्मक–ग. ड. । १९. 'स्वेच्छा···चारी' नास्ति–ख. ट. ज. । २०. संक्रीडमानः–ख. ग. छ. । २१. 'इति' नास्ति–ख. ग. घ. छ. । २२. 'सर्व···रक्षतीति यावत्' नास्ति–ख. ट. ज. ।

1. सर्वेषामिति। सर्वेषामिति षष्ठ्यन्तस्य संबन्धस्यानिष्टेष्वन्वयः। सर्वदा समयनिष्ठानां समयच्युतिसंभवादीनि यान्यनिष्टानि तेभ्यो रक्षतीति यावत्।

सर्ववेशकरं[1] देवि सर्वश्रेयस्करं[2] परम् ।
सर्वमन्त्रमयं देवि सर्वयोगेश्वरीमयम्[3] ॥ ४७ ॥
सर्वपीठमयं देवि सर्ववेधकरं पुनः ।

---

यत्कर्तव्यमर्थ्यं च तस्य सर्वस्य साधकमित्यर्थः । सर्ववेशकरं साधकसमीहितसर्वावेशकरम् । सर्वश्रेयस्करं सर्वस्य श्रेयसः कारकम् । परम् अनुपमम् । सर्वमन्त्रमयं पूर्णाहन्तासारत्वात् । सर्वयोगेश्वरीमयं महाशक्त्यधिष्ठानत्वात्,

---

सर्वानन्दकर तथेति ।[10] सर्वेषामानन्दकरम् । अयमर्थः—ब्रह्मरन्ध्रसहस्राराम्बुजोदरगतमेतन्मातृका[11]पीठ[12] परमानन्दामृतपूर्णे[13] शरीरा[14]धारनाड्यधिष्ठितानां चतुष्षष्टिलक्षकोटिप्रभृतियोगिनीनां सर्वासां कुलदेवीनामविरतवर्षत्परामृतवर्षधाराप्लावितानां[15] परमसमावेशकरमित्यर्थः । सर्वकर्मकरं चापीति । शिवशक्त्यात्मकं चक्रं प्राणापानात्मनाऽन्तःकरणबहिष्करणात्मना च[16] प्रविश्य वचनादानगमनोत्सर्गा[17]नन्दात्मकं श्रवणस्पर्शनादिकं[18] च करोतीति यावत् । अथवा वश्याकृष्ट्यादिसर्वकर्मकरं चेत्यर्थः । सर्वकार्यार्थसाधकमिति[19] । कार्यं कर्तव्यम्[20] । अर्थः पुरुषार्थः । कर्तव्यतयाऽभिप्रेतपुरुषार्थानां सकलानां साधकमिदं[21] चक्रमित्यर्थः ॥ ४६ ॥

सर्वावेशकरमिति ।[22] सर्वेषामावेशकरं सर्वेषां भूतप्रेतपिशाचादीनां दुष्टचेतसां दर्शनमात्रेणावेशकरं महाभयोत्पादनद्वारेण कम्पकरमिद चक्रमित्यर्थः । सर्ववेधकर

---

१. वेश–ख. । २. 'सर्वश्रेयस्करं परम्' इत्यतः पूर्वं 'सर्ववेधकरम्' इत्यादि 'सर्वार्थसयुत चैव' इत्यन्त ४८-४९ श्लोकस्थो भागो वर्तते–वाक ख. ग. से. अ । ३. 'सर्वयोगेश्वरीमयम्' इत्यतः पूर्वं 'सर्वतीर्थमयं पुनः' इत्यादि 'सर्वोन्मादकरं देवि' इत्यन्त ४९–५० श्लोकस्थो भागो वर्तते–वाक. ख. ग. । ४. चैव–अ. ब. सव. घ । ५. वोच–सक. । ६. परम्–वाग. ब से. । ७. मयश्च–क. । ८. णम्–क. । ९. गोश्व–क. । १०. सर्वानन्दकरमित्ययं–क. ग. छ. । ११. मन्त्रमातृका–घ. । १२. पीठ–क. ग. । १३. पूर–ख. घ. ङ. ज. । १४. रधारणाद्य–क. ग. छ. ज । १५. प्लावितानां–क. ग. छ. । १६. 'च' नास्ति–क. ग. छ. । १७. नविसर्गा–क. ग. छ. । १८. दि कर्म करो–क. ग. घ. छ. । १९. नमिति–ख. घ. ङ. ज । २०. थ्यमिति–क. ग. छ., अर्थसाधनम् अर्थं पुरुषार्थं, तत्साधनम्–घ. । २१. 'इदं' नास्ति–क. ग. घ. छ. । २२. 'सर्वेषामावेशकर' नास्ति–क ग. छ. ज ।

**सर्व[1]तत्त्वमयं दे[2]वि सर्व[3]ज्ञानिलयं तथा ॥ ४८ ॥**
**स[4]र्वार्थसंयुतं चै[5]व सर्वज्ञानमयं प्रि[6]ये ।**

"चै[7]तुष्पष्टियंतः" ( ४।५७ ) इत्युक्तत्वाच । सर्व[8]पीठमयं विश्वकारणोपलब्धि-स्थानत्वात् । सर्ववेधकरमिति । अ[9]यमर्थः—

उच्चारकरणध्यानवर्णस्थानप्रकल्पनैः ।
यो भवेत् स समावेशः सम्यगाणव उच्यते ॥
उच्चाररहितं वस्तु चेतसैव विचिन्तयन् ।
यं समावेशमाप्नोति शाक्तः सोऽत्राभिधीयते ॥
अकिञ्चिच्चिन्तकस्यैव गुरुणा प्रतिबो[10]धतः ।
उत्पद्यते य आवेशः शाम्भवो[11] स उदाहृतः ॥ (२।२१-२३)

इति श्रीमालिनीविजयोत्तरनिर्णीतदिशा आणवशाक्तशाम्भवसमावेश-रूपं वेधं करोतीति । सर्वतत्त्वमयं महासंविदाधारत्वात् तदुल्लासितपट्-

परमिति । आणवशाक्तशाम्भवप्रकारेण त्रिविधो वेधः । तस्य सर्वस्य कारकमिदं चक्र-मित्यर्थः । सर्वतत्त्वमयं देवीति । सर्वेषां त[12]त्त्वानामात्मविद्याशिवतत्त्वान्तर्भूतानां समुदाय-स्व[13]रूपमिदं चक्रमित्यर्थः । सर्वज्ञानप्रदं तथेति । सर्वेषां प्राणिनामन्तः प्रविश्य तत्तच्छ्रोत्रादि-घ्राणान्तेन्द्रियमुखेनात्मशक्त्युपोद्बलितेन शब्दादिगन्धान्[14]तानामर्थानां विषयभूतानां ज्ञानानि तेषां ददात्यनुगृ[15]हीतुमिच्छयेदं चक्रमि[16]त्यर्थः । अथवा सकलशास्त्रतत्त्वज्ञानं ददातीति स[17]र्वज्ञानप्रदम् । सर्व[18]र्द्धिप्रदं चेति । स[19]र्वासामृद्धीनां प्रदं सर्वर्द्धिप्रदम् ।

१. कां—शाक. ख. । २. चापि—सप. । ३. सर्वज्ञानप्रदं—चाग. अ. से. सक., सर्वज्ञानालयं—ब., सर्वज्ञानमयं—सस. । ४. सर्वार्थसंयुतं—शाक. ख., सर्वसिद्धिप्रदं—चाग. से. सद्र., सर्वर्द्धिप्रदं चेति—अ. । ५. चापि—सस. । ६. तथा—सप. । ७. 'चतु'''स्याच्च' नास्ति—ख. । ८. अष्टपीठाधिष्ठानत्वात्—ख. । ९. 'अयमर्थः' नास्ति—ख. । १०. धित—क. ग. । ११. वोऽस्मादुदीरितः—ख. ग. । १२. विद्यानाम्—क. ग. छ. । १३. रूपं चक्रम्—क. ग. घ. छ. । १४. न्तानां विषयाणां—क. ग. छ. । १५. गृहीत—क. ख. ग. छ. । १६. 'इत्यर्थः' नास्ति—क. ग. छ. । १७. 'सर्वज्ञानप्रदम्' नास्ति—क. ग. घ. छ. । १८. सिद्धि—ख. घ. ङ. ब. । १९. सर्वासां सिद्धीनां प्रदं सर्वसिद्धिप्रदम्—ख. ब., नास्ति—क. ग. छ. ।

सर्ववेदमयं देवि सर्वतीर्थमयं पुनः ॥ ४९ ॥

त्रिंशत्तत्त्वमयम्। सर्वाम्नायनिलयम्[2]। आम्नाः शास्त्राणि, तेषां निलयः[3] कोश-गृहम्। उक्तं च—"श्रुतिस्मृती ममैवाज्ञे" इति। सर्वान्वयोत्पत्तिभूमिमहा-शक्त्यधिष्ठानमित्यर्थः। सर्वार्थसंयुतं सर्वप्रयोजनसंयुतम्। सर्वज्ञानमयम् एतदुपासनेन सर्वज्ञत्वसिद्धिरित्यर्थः। वेदमयं वेदेषु यत्फलं तदत्रेति।

---

पुत्रमित्रकलत्रवित्तरत्नगजतुरगपशुदासदासी[6]गृहगृहोपकरणगुणवृत्तशीलदाक्षिण्यसौन्दर्य-विचित्रभूषणा[7]दीनामृद्धिमुन्नतिमन्वहं ददाति स्मरणमात्रेणेदं चक्रमित्यर्थः। सर्वश्रेयस्करं परमिति। सर्वेषां श्रेयसां करं सर्वश्रेयस्करम्[8]। योगान्तरायभूतानामर्वाचीनसिद्धयुप-सिद्धयाख्यश्रेयसां सर्वेषां[9] स्मरणमात्रेण संपादकमिदं[10] चक्रमित्यर्थः। सर्व[11]मन्त्रमयं देवीति। वर्णाध्वसंभवा ये सप्तकोटिमहामन्त्रास्तेऽपि चिच्छक्त्युल्लासात्मकतामाश्रित्य दीपिताः सर्वकामफलप्रदा भवन्ती[12]त्यतः सर्वमन्त्रमयमिदं[13] चक्रमित्यर्थः। सर्वयोगेश्वरीमयमिति। गगनस्वर्गमर्त्यपातालनागाख्यपञ्चस्थलेषु श्रीकण्ठानन्तशङ्करपिङ्गलसादाख्याः पञ्च नाथा अधिकारिणः। तत्परिग्रहाश्चतुष्पष्टिलक्षकोटि-द्वात्रिंशल्लक्षकोटि-षोडशलक्षकोटि-अष्ट-लक्षकोटि-चतुर्लक्षकोटिडाकिन्यादिहाकिन्यन्तषड्योगिन्यंशभूतानां समस्तयोगेश्वरीणां स्वरूपं समस्तयोगिनीवृन्दविग्रहमिदं चक्रमित्यर्थः। सर्वपीठमयं चैवेति। सर्वपीठानि चतुष्[14]षष्टिसंख्याकानि। [1]पीठोपपीठसन्दोहोपसन्दोहक्षेत्रोपक्षेत्रपीठेशपीठेशक्षेत्रपाल-वटुकगणेशादिसहितं सर्वमे[15]वाष्टाष्टयोगपीठान्तर्भूतम्। तादृशयोगपीठमयमिदं चक्रमित्यर्थः। सर्वज्ञानमयं प्रिये। इति। अकुलकुलकुलाकुलकौलशुद्धकौलाख्यकुल-पञ्चकशास्त्रप्रतिपाद्यतत्त्वज्ञानमय[16]मिदं चक्रमित्यर्थः। सर्वदोषहरं प्रिये। इति। दोषा

---

१. देवमयं—वाक. ख., दोषहरं—वाग. अ. से.। २. यं तथा—ख.। ३. निलयं—ग.। ४. इयो—ग.। ५. सर्ववेद—ख.। ६. 'गृह' नास्ति—क. ख. ग. छ.। ७. 'आदि' नास्ति—क. ग. छ.। ८. 'श्रेयसां करं सर्वश्रेयस्करम्' नास्ति—क. ग. छ.। ९. 'सर्वेषां' नास्ति—क. ग. छ.। १०. 'इदं चक्रमित्यर्थः' नास्ति—क. ग. छ.। ११. 'सर्व…मन्त्रमयमिदं चक्रमित्यर्थः' नास्ति—ख. ङ. ज.। १२. भवन्तीत्यतः इत्यतः—क. ख. ग. छ.। १३. 'इदं चक्रं' नास्ति—क. ग. छ.। १४. विषसंख्यानि—ख. ङ. ज.। १५. मेवं देव्याद्यष्टयोग—ख. ङ, ज.। १६. मयमित्यर्थ—क. ग. छ.।

1. पीठोपपीठसन्दोहोपसन्दोहक्षेत्रोपक्षेत्राणि तन्त्रालोके (१५।८४-९२) तट्टीकायां च द्रष्टव्यानि।

सर्वव्रतमयं[1] चैव[2] सर्वामृतमयं तथा ।
सर्वदुःखप्रशमनं[3] सर्वशोकनिवारणम् ॥ ५० ॥

---

तीर्थमयं[4] गङ्गादिषु यत्पुण्यं तदत्रेति । व्रतमयं[5] कृच्छ्रादिषु यत्फलं[6] तदत्रेति । सर्वामृतमयम्[1] । यद्यदनिष्टं तत्तन्मृत्युरूपम्, तस्य सर्वस्य प्रत्यनीकमिदं चक्रमित्यर्थः । दुःखप्रशमनम् आध्यात्मिकादिदुःखानां प्रशमनम्[7] । शोकनिवारणम्[8] इष्टविषयवियोगजानां शोकानां निवारणम् । अयं भावः—सवासनस्य चक्रराजस्योपासनेन सर्वविषयसङ्गहेतुभूताज्ञाननिवर्तकमात्मज्ञानमुदेति । यदुपनिषत्—"सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित् । श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति । सोऽहं भगवः शोचामि । तं मा भगवान् शोकस्य पारं तारयतु" ( छा० उ० ७।१।३ ) इत्युपक्रम्य "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय ( देवर्षये नारदाय ) तमसस्पारं दर्शयति भगवान् सनत्कुमारः" ( छा० उ० ७।२६।२ ) इति चोपसंहरति ।

---

ब्रह्महत्यादयस्तान् स्मरणमात्रेण नाशयतीदं[10] चक्रमित्यर्थः । सर्वतीर्थमयं पुनरिति[11] । सर्वासां[12] शुद्धीनां सर्वतीर्थ[13]शब्दोपलक्षितानां स्वरूपमिदं चक्रमित्यर्थः ।

सर्वामृतमयं तथेति । मृत्युपाशपाशितानां सर्वप्राणिनाम[14]मृतमयं मृत्युपाशजालमोचनकरमिदं[15] चक्रमित्यर्थः । सर्वदुःखप्रशमनमिति[16] । सर्वेषां मानसानामाधिसंभवानां दुःखानां प्रशमनमिदं चक्रमित्यर्थः । सर्वशोकनिवारणमिति[17] सर्वेषां पुत्रमित्रकलत्रादिवियोगजानां शोकानां[18] निवारणमिदं चक्रमित्यर्थः[19] ॥ ४७-५० ॥

---

१. तत्त्व—सख. । २. देवि—सख. । ३. दुष्ट—सघ. । ४. सर्वतीर्थं—ख. । ५. सर्वव्रत—ख. । ६. यत्पुण्यं—क. । ७. नमिति—क. । ८. सर्वशोक—ञ. । ९. तंन—ख. । १०. नाशयतीति—क. ग. घ. छ. । ११. 'पुनः' नास्ति—क. ग. घ. छ. । १२. सर्वशुद्धीनां—क. ग. घ. छ. । १३. 'सर्व' नास्ति—ख. ङ. ज. । १४. सर्वप्राणिनां' नास्ति—क. घ. । १५. 'इदं चक्रमित्यर्थः' नास्ति—क. ग. छ. । १६. 'सर्व…प्रशमनमिदं चक्रमित्यर्थः' नास्ति—क. ग. छ. । १७. 'इति' नास्ति—क. ग. छ. । १८. 'शोकानां' नास्ति—क. ग. छ. । १९. 'इदं चक्रमित्यर्थः' नास्ति—क. ग. छ. ।

1. "सर्वामृतमयं पञ्चविधमोक्षावहम् । मृतमनिष्टं तन्निवारकमिति केचित्" ( से. पृ. ४२ ) ।

सर्वोन्मादकरं[1] देवि सर्वाह्लादन[2]कारकम् ।
सर्व[3]दौर्भाग्यशमनं सर्वविघ्नर्नि[4]वारणम् ॥ ५१ ॥
सर्वसिद्धिकरं[5] चक्रं[6] सर्वाशापरिपूरकम्[7] ।
रौद्रा[8]भिचारकोदण्ड[9]परमन्त्रौ[10]घभक्षणम्[11] ॥ ५२ ॥

सर्वोन्मादकरम् । उन्मादो विभ्रम., लोकोत्तरो विलास इत्यर्थ. । सर्वाह्लादनकारकं महानन्दहेतुत्वात् । दौर्भाग्यम्[12] अस्पृहणीयता । विघ्नैः[13] प्रस्तुतहन्ता । सिद्धिरणिमाद्या विभूति. । रौद्रेति । रौद्राः क्रूरा. । अभिचारका हिंसितार. ।

सर्वोन्मादकरं चेति । सर्वासां सुन्दरीणां कन्दर्पदर्पजन्यप्रेमगर्भोपबृंहितकृत्याकृत्यापरिज्ञानेनोन्मत्तवत् स्वात्मवृत्तानभिज्ञानप्रायः कोऽप्यान्तरो भाव उन्मादः । साधकार्यं[14] तदर्थयुक्तं करोतीदं चक्रमित्यर्थः । सर्वाह्लादकर तथेति । सर्वेषामाह्लादकरं सर्वाह्लादकरम् । [15]सर्वेषां संसारतापपरितप्तचित्तानां देशिकेन्द्रपादोप[16]सर्पणसंलब्धचक्रविभ[17]वानां स्वविन्यासपरिज्ञानमात्रेण संसारतापप्रशमनद्वारेणाह्लादकरम् आह्लादं जनय[18]तीदं चक्रमित्यर्थः । सर्वदौर्भाग्यशमनमिति । दौर्भाग्यं दुर्भगत्वं स[19]कललोकपरिहासविषयत्वम् । तच्छमय[20]तीदं चक्रमित्यर्थः । सर्वविघ्ननिवारणमिति । स[21]र्वेषां योगान्तरायभूतानां विघ्नानां निवारणमित्यर्थः । सर्वसिद्धिप्रदमिति । सर्वासामणिमादीनां सिद्धीनां साधकमि[22]दमित्यर्थः । सर्वाशापरिपूरकमिति । सर्वेषां मनोरथाना परिपूरकं [23]साधकमिदं चक्रमित्यर्थः ।

१. सर्वदोषहर-च सध. । २. कर तथा-अ., कारणम्-सल. घ. । ३. नास्त्येषा पङ्क्ति-सल. । ४. विनाशनम्-सघ. । ५. त्रैलोक्यमोहन-सल. । ६. प्रद-वाग. से. अ. सक. । ७. 'सर्वाशापरिपूरकम्' इत्यत परम् 'सर्वसंक्षोभक चैव सर्वसौभाग्यदायकम् । सर्वार्थसाधकं चक्र सर्वरक्षाकर तथा ॥ सर्वरोगहर चक्र सर्वसिद्धिप्रद तथा । सर्वानन्दमय देवि नवम चक्रनायकम् ॥' इति द्वौ श्लोकावधिकौ स्त-सल. । ८. 'रौद्राभिचार' इत्यादि 'स्तम्भकरं परम्' इत्यन्त श्लोकद्वय नास्ति-सल. । ९. कोच्चण्ड-वाक. ख., कोदण्ड-वाग. से. सघ., कोदण्ड-अ. सक. प. । १०. परम शैवलक्षणम्-सघ. । ११. कम्-वाक. ख. ग. । १२. सर्वदौ-ख. । १३. विघ्नप्रस्तुता-क. । १४. तदर्थ-क. ग. घ. छ. । १५. 'सर्वेषां ''ह्लादकरम्' नास्ति-ग. । १६. सर्पणकस-ख. ङ. ञ. । १७. विभागानां-क. ख. ग. छ. । १८. यतीत्यर्थ.-क. ग. छ. । १९. सर्व-क. ग. छ. । २०. शोषयं-क. ग. छ. । २१. सर्वरोगा-क. ग. घ., सर्वभोगा-छ. । २२. 'इद' नास्ति-क. ख. ग. ङ. छ. ञ. । २३. 'साधकमिद चक्रमित्यर्थ.' नास्ति-क. ग. छ. ।

परसिद्ध्याकर्षणं च पराज्ञा[1]कर्षणं तथा ।
परसैन्यस्तम्भकरं[2] परविज्ञान[3]मोहनम् ॥ ५३ ॥
परच[4]क्रस्तम्भकरं[5] शास्त्रस्तम्भकरं[6] परम्[7] ।
महाच[8]मत्कारकरं महाबु[9]द्धिप्रवर्तकम्[10] ॥ ५४ ॥

---

अत एवोद्दण्डा उन्मार्गाः । परे शत्रवः । तेषां मन्त्रौघो मन्त्रराशिः । तस्य भक्षणम् । [11]अक्रमोपासकानामयथादेवताज्ञानानां मन्त्रग्रामघस्मरमिदं चक्रमिति भावः । महाचमत्कारकरम् । [1]अनेडमूकानामपि हस्तमस्तकसंयोगात्

---

रौद्राभिचारकोद्दण्डपरमन्त्रौघभक्षणमिति । परैः शत्रुभिः साधकध्वंसमाशंसमानैरभिचाराय प्रयुक्ता ये मन्त्रास्ते[12] रौद्रा निर्घृणाः, उद्दण्डा नृशंसाः, तान् मन्त्रान्[13] भक्षयति[14] तत्सामर्थ्यमुपसंहरतीदं[15] चक्रमित्यर्थः ॥ ५१–५२ ॥

परसिद्ध्याकर्षणं चेति । पराः प्रतिस्पर्द्धिनो ये सिद्धाः शात्रवं गता मारणादिक्रियानिपुणाः क्षुद्रसिद्धिसम्पन्नास्तेषां सिद्धिं साधकेन स्वचक्रमध्यस्थिततया चिन्तितां[16] तामाकर्षयतीदं चक्रमित्यर्थः । पराज्ञाकर्षणं तथेति । परेषामन्येषां प्रतिस्पर्द्धिनामाज्ञां निग्रहानुग्रहकरीमपि चक्रवैश्वानरपरितप्ततया[17] चिन्तितामाकर्षयतीदं चक्रमित्यर्थः । [18]परसैन्यस्तम्भकरमिति । परेषां शत्रूणां सैन्यं स्तम्भयतीदं चक्रमित्यर्थः । स्तम्भनप्रकारश्च [2]प्रयोगप्रकरणे तदवसरे भणितव्यः । परविज्ञानमोहनमिति । परेषामन्येषां विज्ञानं[19] तस्य मोहनं तस्य प्रमोषकरं[20] चक्रमित्यर्थः ॥ ५३ ॥

---

१. ज्ञा–सघ. । २. कं च–वाक. ख. ग. । ३. ज्ञानवि–सघ. । ४. वक्त्र–वाक. ख. । ५. कं च–वाक. ख., नं च–सघ. । ६. नकं–वाक. ख. ग. । ७. तया–से. । ८. महत्कार–वाग. । ९. भुक्ति–वाक. ख. अ., भक्ति–अ. सघ., मुक्ति–सक. । १०. वर्ध–सख. । ११. अयं भावः–अक्र···चक्रमिति–ख. । १२. 'ते' नास्ति–क. ग. घ. छ. ज. । १३. 'मन्त्रान्' नास्ति–क. ग. छ. । १४. जयति–क. ग. छ. । १५. मपहरतीत्यर्थः–क. ग., मपहन्तीत्यर्थः–छ. । १६. चिन्तितानां कर्ष–क. ग. घ. छ. । १७. तप्ता या चिन्तिता ता–ख. ङ. ज. । १८. 'पर··· स्तम्भयतीदं चक्रमित्यर्थः' नास्ति–ख. । १९. ज्ञानस्य–क. ग. छ. । २०. पकमिति–क. ग. छ. ।

1. अनेडमूकानामपीति । "भगवत्पादैरनेडमूकेभ्यो लघुचर्चास्तोत्रद्वयं हस्तमस्तकसंयोगमहिम्नाऽवाचि" (लक्ष्मीधरा, पृ. २८१) ।

2. प्रयोगप्रकरण इति । द्वितीये प्रयोगाख्ये पटले ६७ इत्यादिश्लोकेषु स्तम्भनप्रकारो दृश्यते ।

[ [1]महावाणीकरं देवि महासौभाग्य[2]दायकम् ।
महावश्यकरं देवि महासौभाग्यदायकम् ॥ ]
महाज्वरहरं देवि महाविपहरं [3]परम् ।
[4]महामृत्युप्रशमनं महाभयवि[5]नाशकम् ॥ ५५ ॥

सारस्वताद्यावेशकरमित्यर्थः । महाबुद्धिप्रवर्तकम् अव्युत्पन्नानामपि वेदशास्त्रा-द्युपन्यास[6]करम् । महावाणीकरम् अशिक्षितैकपदप्रयोगनिपुणानामपि महा-काव्यकर्तृताकरमित्यर्थः । महासौभाग्यं सर्वस्पृहणीयता । महाज्वरोऽभिचा-रादिकृतः । महामृत्युः कालप्राप्त. । महाभयं [7]देहप्रमातृता । [8]तदुक्तं क्षेमेन्द्रेण गीतानिष्यन्दे—

तावद् व्याघ्रभय नृपानलभयं वेतालकृत्याभयं
शून्यारण्यभयं [9]महाशनिभयं दु.स्वप्नशङ्काभयम् ।
वातोत्पातभयं ग्रहज्वरभयं क्षुब्धाब्धिवेलाभयं
वैराग्येण न यावदेव गलित. कायाभिमानभ्रमः ॥ इति ।

---

परचक्रस्तम्भकरमिति । परेषां स्वविपरीतानां विषयान्तरादागतानां राज्ञां चक्रं स्तम्भयतीदं चक्रमि[10]त्यर्थः । शस्त्रस्तम्भकरमिति । परैः शत्रुभिः प्रयुक्तानि[11] शस्त्राणि स्तम्भ-यति, यथा साधकस्य [12]बाधकानि न भवन्ति तथा करोतीदं चक्रमित्यर्थः । महाचम-त्कारकरमिति । महाचमत्कारा उड्डीनादयो झटिति लौ[13]किकानां बहुमानहेतवः प्रयोग-विशेषाः, तेषां सम्पादन[14]करं चक्रमित्यर्थः । अथवा महत्या परायास्त्रिपुरायाश्चमत्कारोऽ-नुभवः, शक्तितत्त्वपरिज्ञानमिति यावत् । महा[15]भुक्तिप्रवर्तकमिति । [16]हाटकेश्वरादि-भुवनेष्वधिकारितया स्थितिर्महाभुक्तिस्तत्सम्पादकमित्यर्थः ॥ ५४ ॥

— —

१ एषा पङ्क्ति गे. वाग ञ्च. विहायान्यत्र न दृश्यते । २. सौख्यप्र—वाग. से. । ३. तथा—वाग. से. गघ. । ४ अप—गघ । ५. विनाशनम्—वाग, ख., निवारणम्—वाग. से. । 'रौद्राभिचार' इत्यादि 'स्तम्भकर परम्' इत्यन्तं श्लोकद्वयमत्र वर्तते—गघ. । ६. सम्प्रवर्तकम्—ख. । ७. 'देह' नास्ति—क. ख. । ८. एतदुक्तं—क. । ९. घना—ख. ग. । १०. 'इत्यर्थः' नास्ति—क. ग. । ११. ग्यस्त्राणि—क. ग. ङ. । १२. बन्धकानि—छ., साधकानि भवन्ति—घ. । १३. लौकिकानां—क. ग. ङ. ञ. । १४. करमिदं—घ. । १५. भक्ति—क. ग. ङ. । १६. समस्तभुवनादि—घ. ।

महावश्यकरं देवि महावेधकरं परम्[2] ।
महापुरक्षोभकरं महासुखशुभप्रदम्[3] ॥ ५६ ॥
महालक्ष्मीमयं देवि महामाङ्गल्य[5]दायकम् ।

महावश्यकरं राजोर्वश्यादीनामपि[6] । महावेधकरं पर्वतगजादीनामपि । महापुरक्षोभकरं साधकेन्द्रे[7] प्रविष्टे द्वारवतीन्द्रप्रस्थमथुरादिषु कृष्णाभिगमने यथा, यथा वा देवदारुवनादिषु परमेश्वरप्रवेशे । महासुखशुभप्रदम् । महासुखं[8] महाशुभमिति । महासुखम् अकृत्रिमाहंपरामर्शः । महाशुभं[9] विश्वदेहिविलयः । महालक्ष्मीमयम् । शिवशक्तिसामरस्यरूपं महाविकासमयमित्यर्थः । महा-

महावश्यकरं देवीति । समस्तलोकवशङ्करमित्यर्थः[10] । महासौभाग्यदायकमिति । समस्तसुन्दरीवल्लभसम्पादकमित्यर्थः । महाज्वरहरं देवीति । महतां चातुर्थिकादीनां ज्वराणां नाशकरमिति यावत् । महाविषहरं परमिति । महतामल्पप्राणानामपि[11] विषाणामपहारकमिति यावत् । महामृत्युप्रशमनमिति । केनचिद्दोषेणाकालसम्भवानामपि मृत्यूनां नाशकरमित्यर्थः । अथवा[12] कालमृत्यूनां नाशकरं भवति । महाभयविनाशकमिति । राजचौरादिनिमित्तानामपि भयानां[13] नाशकरमित्यर्थः[14] ।

महापुरक्षोभकरमिति[15] । महतामिन्द्रचन्द्रादि[16]पुराणामपि क्षोभकरम्, किमुताल्पविभवानां[17] भूवलयसंस्थितानामिति[18] यावत्[19] । महासुखशुभप्रदमिति । समस्तकरणोल्लास[20]-

१. एषा पङ्क्तिः से. सध. ऋ. विहायान्यत्र न दृश्यते । २. पुनः—सध. । ३. मुक्तिप्रवर्तनम्—सरू., शुभसुख—सख. । ४. करं—सख. । ५. मङ्गल्य—ङाक. ख. ग., मङ्गल—अ. सख. । ६. राजवश्या—क. । ७. साधके—ग. । ८. 'महासुखं महाशुभमिति' नास्ति—ख. । ९. 'महाशुभं···परामर्शः' नास्ति—ख. ग. । १०. समस्तवश्यकर—क. ग. घ. । ११. 'अपि विषाणां' नास्ति—क. ग. छ. । १२. 'अथवा कालमृत्यूना नाशकरं भवति' नास्ति—ख. ङ. । १३. 'भयानां' नास्ति—क. ख. ग. छ. । १४. नाशकम्—क. ख. ग. छ. । १५. इतः पूर्वम्—'पौष्टिकादिविशेषफलदम् । मोहमनेन दर्शयतीति भावः । सर्वर्तुकैः सर्वफलैः सर्वपुष्पैरपि प्रिये । विहाय मारणोक्तानि फलपुष्पाणि सुव्रते ॥ यो जुहोति स वै सर्वसम्पदामालयो भवेत् ।' अधिकः पाठः—क. छ. । १६. 'आदि' नास्ति—क. ग. घ. छ. । १७. विभाव्या—ख. ङ. । १८. भूर्लोकस्थि—क. ग. छ. । १९. 'यावत्' नास्ति—क. ग. छ. । २०. कारणो—क. ग. घ. छ. ।

महाप्रभावसंयुक्तं महापातकनाशनम् ॥ ५७ ॥
एवमेतस्य चक्रस्य प्रभावो वर्णितुं[1] मया ।
न शक्यते महादेवि कल्पकोटिशतैरपि ॥ ५८ ॥

---

माङ्गल्यदायकम् । महामाङ्गल्यं द्वैतग्रामधिक्कारः । महाप्रभावं सदाशिवादिकं यद्बलम् । महापातकं शिवात्मभेदपरामर्शः । तदुक्तं[2] भट्टगङ्गाधरेण—

आत्मेशजगतां भेदं[3] यो नरः कुरुते[4]ऽमतिः ।
स महापातकी सत्यं पातकस्य महत्त्वतः ॥ इति ।

किं बहुना, चक्रराजवर्णनं कर्तुं[5]मशक्यमित्याह—एवमेतस्येति । अर्थवादा[6]शङ्का न कार्या । तदुक्तं श्रीत्रिंशिकाशासने—

---

संकोचवशाद् मूलादिब्रह्मरन्ध्रान्त[7]रालकुहरस्फु[8]रितमहायोगपीठ[9]पीठिकासु समुल्लसिताकारपरापरलिङ्ग[10]महाह्रदनिमग्नमनो[11]महावारणानां महायोगिनां यदनुभवसुखं तदेव शुभं [12]प्रकाशयति । त[13]त्सुखं ददातीति यावत् । उक्तं च श्रीमतशास्त्रे —

[1]यत्र यत्र मनस्तुष्टिस्तत्र तत्रैव धारयेत् ।
तत्र तत्र परानन्दस्वरूपं संप्रकाशते ॥

अथवा शुभं शोभनं तत्संपादकमित्यर्थः । महालक्ष्मीमयं देवीति । महालक्ष्मी राज्यादिलाभस्तं ददातीत्यर्थः । महामङ्गलदायकमिति । महाभ्युदयपर[14]म्पराप्रदायकमिति यावत् । महाप्रभावसंयुक्तमिति । महासामर्थ्यं ददातीत्यर्थः । महापातकनाशनमिति । प्राकृतानां ये ये पातका न ते कुलमार्ग[15]वर्तिनां महापातकाः, किन्तु [2]वीरहत्यादयोऽन्ये म[16]हापातकाः पञ्च । तेषामपि ना[17]शकरमिदं चक्रमित्यर्थः ॥ ५५-५७ ॥

१. वर्णितो—मे. । २. उक्तं—क. । ३. भेदे—क. ख । ४. ते मतिम्—ग. ख. । ५. वक्तुं—ग. । ६. 'अर्थवादा ··नार्हति ॥ इति' नास्ति—क. ख. । ७. विलोलकमल—ख. ङ. ज. । ८. 'स्फुरित' नास्ति—क. ख. ग. छ. । ९. 'पीठ' नास्ति—क. ग. छ. । १०. पिङ्गल—ख. ङ. ज. । ११. 'महा' नास्ति—ख. ङ. ज. । १२. प्रकाश्यते—ग. प्रकाशयतीति—ज. । १३. 'तत्सुखं···शोभनं' नास्ति—ख. ङ. ज. । १४. पारम्पर्यदा—ङ. । १५. संबन्धिनां—क. ग. छ. । १६. महान्तः—घ. ज. । १७. नाशकमित्यर्थः—क. ग. घ. छ. ।

1. एष श्लोकः स्वल्पेन पाठभेदेन सह विज्ञानभैरवे ( श्लो. ७४ ) उपलभ्यते ।
2. वीरहत्यादय इति । "वीरहत्या वृथापानं वीरपत्नीनिषेवणम् । वीरद्रव्यापहरणं तत्संयोगश्च

नार्थवादादिशङ्का च वाक्ये माहेश्वरे भवेत् ।
अबुद्धिपूर्वं हि तथा संस्थिते सततं भवेत् ॥
अनवच्छिन्नविज्ञानवैश्वरूप्यसुनिर्भरः ।
शास्त्रात्मना स्थितो देवो मिथ्यात्वं क्वापि नार्हति ॥ इति ॥ ४५-५८ ॥

---

एवमेतस्येत्यारभ्य कल्पकोटिशतैरपीत्यन्तस्यायमर्थः—एवंप्रभावस्यास्य महाचक्रस्य प्रभावो वर्णयितुं मया न शक्यते । [1]बहुकालं वर्णयता मयापीति यावत् ॥ ५८ ॥

अन्यच्च (च)क्रस्तुर्यां (महा? मोह)नादिपदेन मूलस्वामिन्या नवचक्रनामसंकेतः कृत इति । तदुक्तं वामकेश्वरतन्त्रे—

त्रैलोक्यमोहनं चक्रं सर्वाशापरिपूरकम् ।
सर्वसंक्षोभणं देवि सर्वसौभाग्यदायकम् ॥
सर्वार्थसाधकं चक्रं सर्वरक्षाकरं तथा ।
सर्वरोगहर चक्रं सर्वसिद्धिप्रदायकम् ॥
सर्वानन्दमयं चापि नवमं सुरसुन्दरि । इति ।

[1]एतद्वाह्यगतमिति । एतस्य चतुर्दशारचक्रस्य बहिरष्टदलं पद्मं समालिखेत् । [2]तद्वाह्यतस्तस्याष्टारपद्मस्य बाह्यतोऽपि षोडशारं पद्मं रचयेत् । परिवेषो वृत्तत्रयम् । चतुरिति चतुरश्रम् । [3]चतुर्द्वारोपशोभितमित्यर्थः ॥ ४०-४१ ॥

अस्ति चात्र प्रमेयान्तरविषयो ह्येष चक्रसंबन्धः । तदुक्तं श्रीम[4]न्त्रराजे—

अष्टापदे चाष्टशूले गदा चाष्टसु सर्वदा । [5]अष्टाष्टकपदव्या(पि? पी) स गुरुर्भैरवागमे ।
वृत्त[6]द्वये चतुर्द्वारे [7]चतुरश्रत्रये प्रिये । गणेशादिपदव्यां(पि? पी) स गुरुर्भैरवागमे ॥
षोडशाधारचक्रस्थः षोडशस्वरवा[9]चकः । षोडशान्तकलाधा[10]रो स गुरुर्भैरवागमे ॥

---

१. 'बहुकालं वर्णयता मयापि' नास्ति—क. ग. छ. । २. 'तद्वाह्यत ''मित्यर्थः' इत्यस्य स्थाने 'तद्वाह्ये षोडशदलं पद्मं परिवेषरूपेण वृत्तत्रयं द्वारोपशोभितं चतुर्द्वारोपशोभितमित्यर्थः.' इति पाठः—ख. ङ. ज. । ३. द्वारोपशोभितमिति यावत्—क. ग. छ. । ४. श्रीतन्त्रराजीये—ख. । ५. अष्टाष्टकेसरैर्वापि—ङ. । ६. त्रये—ज. । ७. लये—ङ. । ८. स्यापि—ङ. । ९. वाचन.—ङ. । १०. धारे—ङ. ।

पञ्चमः ॥ महापातकमित्युक्तं कौलिकाना कुलान्वये ।" (कुलार्णवे, ११।७०) । मनुस्मृतौ तु—"ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥" (११।५५) इति पञ्च महापातकानि परिगणितानि ।

1. 'एतद्वाह्यगतम्' इत्यादि 'शोभितम्' इत्यन्तं पङ्क्तित्रयं से. श्लो. ४०-४१ श्लोकत्वेन स्थापितं पूर्वमेव व्याख्यातम् । अर्थरत्नावल्यां तदत्र व्याख्यायते ।

अष्टानामष्टधारूपः पदव्यक्तिक्रमेण यः। इति मध्याष्टकं वेत्ति स गुरुर्भैरवागमे ॥
चतुर्दशपदान्तस्थश्चतुर्दशविराजितः। (नश्च? न च)तुर्दशभिन्यूनः स गुरुर्भैरवागमे ॥
दशधा दशगर्भान्तर्विचित्ररचनोज्ज्वलः। दशभूमिपदान्तस्थः स गुरुर्भैरवागमे ॥
दशकौलेश्वरो धीमान् दशदिग् देशभैरवः। दशाश्वमेधमध्यस्थः स गुरुर्भैरवागमे ॥
अष्टधा स्फुरते साधुर्वशिन्यादिभिरष्टधा। वेत्ति तां मन्त्रचक्रस्थां स गुरुर्भैरवागमे ॥
चतुर्धा कर्मविज्ञाने चतुर्धा सन्ततो यथा। यः समाकोशेचण्डेशः स गुरुर्भैरवागमे ॥ इति।

इदमेव चक्रमान्तरीकृत्य सूत्रपातदशायां श्रीवामकेश्वरतन्त्रे प्रतिपादितम्। तत्प्रकारं यथा तथा वक्ष्ये—

अथातः संप्रवक्ष्यामि चक्रसंकेतनिर्णयम्। तदर्थं देवि कुर्वीत त्रिहस्तं मण्डलोत्तमम् ॥
अस्य भार्या तृतीयेन कर्णिका चक्रलाञ्छिता। पथद्वयं चतुर्द्वारं चतुरं चैकभागकम् ॥
ब्रह्मस्थानं ततः कृत्वा कर्णिकाभूमिमध्यमे। चतुर्विंशत्यङ्गुलेन ब्रह्मस्थानं महेश्वरि ॥
भ्रामयेद् वृत्तरूपेण मण्डलं सम्यगालिखेत्। तस्मिन् वृत्ते महादेवि ब्रह्मसूत्रं निपातयेत् ॥
प्राक्प्रत्यगायत देवि सम्यक् प्राचीविधानतः। तस्मिन् सूत्रे महादेवि नवधा लाञ्छनं पतेत् ॥
षट् षट् पञ्च त्रयस्त्रीणि चतुश्च त्रयमेव च। षट् षट् षडङ्गुलेनैव दशभागानलाञ्छितान् ॥
याम्यसौम्यायतं दद्यात् सूत्राणां नव लाञ्छने। नवधा पातिते सूत्रे पार्श्वयोरुभयोरपि ॥
अङ्गुलानि क्रमेणैव मार्जयेत् परमेश्वरि। भ्रमणं सप्तमं चैव तृतीयं चैव वन्दितम् ॥
प्रथमे नवमे चैव पार्श्वयोरुभयोरपि। त्रीणि त्रीण्यङ्गुलान्यत्र मार्जयेदुभयोरपि ॥
पञ्च पञ्चाङ्गुलं मार्ज्यं षष्ठे चैव चतुर्थयोः। उभयोः पार्श्वयोर्मार्ज्यं षोडशं षोडशाङ्गुलम् ॥
पञ्चमस्योभये पार्श्वे मार्जयेत् षोडशाङ्गुलम्। एवं संमार्जयेद् देवि समक्षेत्रं च कर्णिका(म्) ॥
सर्वसूत्राणि पार्श्वौ द्वौ ब्रह्मसूत्रेण संगतम्। योजयेत् क्रमशस्तस्मिन् सप्तमं च तृतीययोः ॥
योजयेदुभयोः पार्श्वौ सृष्टिनिष्ठं महेश्वरि। पञ्चशक्तिचतुर्वह्नितद्विकारसमन्वितम् ॥
द्वितीयस्य द्वयोः पार्श्वौ ब्रह्मसूत्रेण संगतम्। नैवमं योजयेद् देवि नवमं प्रथमे युतम् ॥
नवमस्य द्वयोः पार्श्वौ ब्रह्मसूत्रेण संगतम्। द्वितीयस्य द्वयोः पार्श्वौ ब्रह्मसूत्रेण संगतम् ॥
योजयेदष्टमे देवि अष्टमं च द्वितीयके। अष्टमस्य द्वयोः पार्श्वौ ब्रह्मसूत्रेण संगतम् ॥
चतुर्थस्य द्वयोः षष्ठे ब्रह्मसूत्रेण संगतम्। पञ्चमस्य द्वयोः पार्श्वौ ब्रह्मसूत्रेण संगतम् ॥
षष्ठस्यैव द्वयोः पार्श्वौ ब्रह्मसूत्रेण संगतम्। पञ्चशक्तिश्चतुर्वह्निरेवमेव तु योजयेत् ॥
इति संसिद्ध्यते चक्र कर्णिकान्तर्गतं समम्। पूर्वभागे पञ्चशक्तिः पश्चाद्वह्निश्चतुः प्रिये ॥

अथातः[1] संप्रवक्ष्यामि त्रिपुराचक्रमन्यथा[2] ।
तदर्थं देवि कुर्वीत त्रिहस्तं मण्डलोत्तमम् ॥ ५९ ॥

अथात इत्यादिसूत्रसप्तदशकेन[3] पुनरपि प्रकारान्तरेण चक्रराजविन्यासमाह । अन्यथा "शक्त्या शक्तिम्" ( १।२९ ) इत्युक्तक्रमात्[4] । तदर्थं चक्रराजविन्यासार्थम् । त्रिहस्तं मण्डलोत्तममिति चक्रराजविन्यासाय स्वीकृतं क्षेत्रमुच्यते । तत् त्रिहस्तं कुर्यात् । त्रिहस्तशब्देन समानं[5] त्र्यवयव-

विपरीतं तु वक्ष्यामि पश्चिमं पञ्चशक्तिकम् । चतुर्वह्निः पुरस्तात्तु तद्विशेषं शृणु प्रिये ॥
सप्तमं प्रथमे[6] योगं ब्रह्मसूत्रेण संगतम् । अष्टमं च द्वितीयेन ब्रह्मसूत्रेण संगतम् ॥
प्रथमं नवमं योगं नवमे प्रथमे युतम् । द्वितीयं चाष्टमे योगं ब्रह्मसूत्रेण संगतम् ॥
अष्टमं च द्वितीयेन ब्रह्मसूत्रेण संगतम् । षष्ठं चैव चतुर्थेन ब्रह्मसूत्रेण संगतम् ॥
चतुर्थं सप्तमे योगं ब्रह्मसूत्रेण संगतम् । विपरीतमेवमेवं तु यथोक्तं परमेश्वरि ॥
पञ्चशक्तिचतुर्वह्निसंयोगाच्चक्रसंभवः । तत्रैकमष्टदलं[7] मध्ये द्विदशारं चतुर्दश ॥
चतुर्दश द्वंद्वमष्टावेकं[8] महेश्वरि । सृष्टिसंहारयोगेन शक्तिस्थानान्यनुक्रमात् ॥
स्थितानि त्रिपुराचक्रे यद्बोधाद् भैरवो भवेत् । बहिः पद्मद्वयं[9] कुर्यादष्टषोडशकच्छदम् ॥
गुणवृत्तं ततः कुर्याच्चतुरस्रं च तद्बहिः । चतुरस्रं ततः कुर्यात् कुर्याद् द्वारचतुष्टयम् ॥
चतुष्कोणसमायुक्तमेवं स्याच्चक्रमुत्तमम् । रक्तेन रजसापूर्य चक्रं शुक्लोच्चरेखिकम् ॥ इति ।

अन्यत्राप्येतज्ज्ञातव्यं चक्रम्—

[1]चक्रं बैन्दवमम्बिकामयमियं वामा त्रयो ये भ्रमा
ज्येष्ठेयं यदिदं पुरन्दरपुरे रेखाचतुष्कं बहिः ।
योऽयं शक्रपनलत्रिकोणनिवहो रौद्रीयमित्यामृशन्
योऽर्चाधारमकृत्रिमं कलयते मातः स ते पूजकः ॥

सृष्ट्यादिप्रविभागेन धामत्रयास्यप्रमेयमपि निरूपितं द्रष्टव्यम् ।

१. 'अथातः' इत्यादि 'चक्रमुत्तमम्' इत्यन्ताः सप्तदश श्लोका ऋ. से. विहाय कुत्रापि न दृश्यन्ते । २. चक्रमन्त्रनिर्णयम्—वाक. ख. । ३. इत्यादिसूत्रसप्तकेन—क., इत्येकादशकेन—ख. । ४. इत्युपक्रमात्—क., इत्युक्तत्वात्—ख. । ५. मानं—क., सामान्य—ख. । ६. भ्रमणं—ङ. । ७. दलं—ङ. ज. । ८. द्वन्द्वमष्टावेकमेव—ख. ङ., युतावष्टावेकं—ज. । ९. पद्म—ङ. ।

1. एष श्लोको वामकेश्वरीमतविवरणेऽपि (पृ० २९) दृश्यते ।

अस्य कार्या तृतीयेन कर्णिका चक्रलाञ्छिता ।
पद्मद्वयं द्वितीयेन चतुरस्रं च शेषतः ॥ ६० ॥
ब्रह्मसूत्रं पुरा दत्त्वा कर्णिकाभूमिमध्यतः ।
याम्यसौम्यायतं दद्यात्तत्रस्थं सूत्रसप्तकम् ॥ ६१ ॥
तुर्यसूत्रं ततो लुप्याद् मध्यांशः स्याद् द्विभागशः ।
तृतीयपञ्चमौ नागभूपांशौ द्व्यंशवर्जितौ ॥ ६२ ॥

कतामात्रमुच्यते । अमुमेवार्थं स्फुटीकरोति—अस्येत्यादिना । अयमर्थः—स्वीकृतस्य क्षेत्रस्य भागेनैकेन कर्णिकां भागेन पद्मद्वयं भागेन चतुरश्रं च कुर्यादिति । ब्रह्मसूत्रं प्राक्प्रत्यगायत मध्यतो निहितं सूत्रम् । पुरा प्रथमम् । कर्णिकाभूमिमध्यतः तच्चक्रराजविन्यासाय स्वीकृतस्य त्र्यवयवस्य क्षेत्रस्य मध्यतः कर्णिकालाभाय विरचितस्य वृत्तस्य मध्ये । याम्यसौम्यायतं दक्षिणोत्तरायतम् । तत्रस्थं वृत्तस्थम् । सूत्रसप्तकं सूत्राणां सप्तकम् । अयमत्र प्रकारः—प्रथमं प्राक्प्रत्यगायतब्रह्मसूत्रावलम्बनेन

प्राक् सूत्रं प्रथमं निधाय विदधीतार्धेन तस्याङ्कितं
मध्ये मत्स्ययुगं दिशोरमलधीः कीनाशवित्तेशयोः ।
ताभ्यां सूत्रमभिप्रसार्य चतुरः कोणांस्ततो लाञ्छयेत्
क्षेत्रं स्याच्चतुरस्रमत्र जनयेदन्यानि कुण्डान्यपि ॥
( त्रि. सा. ९१५ )

इत्यभियुक्तोक्तस्थित्या समचतुरश्रोत्पादनानन्तरं त्रिभागीकृते क्षेत्रे मध्यतः कर्णिका[12]वृत्तं[13] विरच्य तत्र दक्षिणोत्तरायतं समकोष्ठं सूत्रसप्तकं पूर्वादिक्रमेण[14] दद्यादिति[15]। तुर्यसूत्रं[16] प्रसृतेषु सप्तसु सूत्रेषु[17] मध्ये पूर्वतश्चतुर्थं सूत्रं

१. तस्य कुर्यात् त्रिभागेन कर्णिकां चक्रलाञ्छिताम् । पद्मद्वयं तदर्धेन द्वारक्षेत्रं च तत्समम् ॥—वाक. ख. । २. भ्रम—वाक. ख. से., क्रम—वाग. । ३. लुप्त्वा—वाक. ख., लुम्पेत्—वाग. से. । ४. द्विभागिकः—वाक. ख., द्विभागतः—वाग. से. । ५. भागौ कृत्वा त्र्यंश—वाक. ख. । ६. यं लक्ष्यते—क. । ७. 'क्षेत्रस्य' नास्ति—ख. । ८. भागाय—क. ग. । ९. सूत्रनिधाना—ग. । १०. दलितार्धेन—क. । ११. पूर्वं—ख. । १२. कर्णिका—ख. । १३. 'वृत्तं' नास्ति—ख. । १४. स्थितः क—ख.ग. । १५. 'इति' नास्ति—क. । १६. आदितुर्यं—क. । १७. 'मध्ये' नास्ति—क.ख. ।

तेन मानेन [१]सप्तैव वीथ्यस्तन्त्रेषु मध्यमम् ।
तृतीयस्य द्वितीयस्य चा[२]द्यसूत्रस्य चान्तयोः ॥ ६३ ॥
प्रसारयेदधोधःस्थं ततः सूत्रद्व[३]येद्वयम् ।
[४]भौमे सप्तमके सूत्रे ब्रह्मस्थाने च संगतम् ॥ ६४ ॥

लुप्यात् मार्जयेत्। मध्यांशः स्याद् द्विभागश इति । तुर्यसूत्रमार्जने कृते मध्यतः कोष्ठद्वयमेकभागो [५]भवतीत्यर्थः । पुनरपि मध्यमभागस्य किञ्चिद्वि[६]कासमाह— तृतीयेति । तृतीयपञ्चमौ । भागावि[७]ति पू[८]र्यम् । नागभूपांशौ अष्टांशषोडशांशौ । द्व्यंशवर्जितौ [1][९]द्वयेनांशेन वर्जितौ । कुर्यादित्यध्याहार्यम् । अयमर्थः—अष्टधा षोडश[१०]धा च वि[११]भक्तौ तृतीयपञ्चमौ भागावेके[१२]नांशेन[2] किञ्चिद्ध्रस्वीकुर्यादिति[3] । तेनेति । तेन मानेन परित्य[१३]क्तांशद्वयेन [१४]मध्यभागमावर्जिततुर्यसूत्रमेकीकृतं महा[१५]मध्यकोष्ठं पुनश्च विवर्धयेत् पुनरपि विकसितं कुर्यात् । तृतीयपञ्चमौ भागौ किञ्चिद्विकसितौ कुर्यादित्यर्थादायातम् । तृतीयस्येत्य[१६]र्धपद्यं पूर्वतः पश्चिमाग्रं [१७]स्थ्यंश्रत्रयमाह । तृतीयस्येत्यनेनान्वितोऽन्त्यशब्दः पर्यन्तवचनः[4] ।

१. भागेन च पुनर्मध्यभागं विवर्धयेत्—वाक. ख. । २. आदि—वाक. ख. ग., स्वाद्य—से. । ३. द्वयं—वाक. ख. ग. । ४. भ्रमे—वाक. ख. । ५. भवेदि—ख. । ६. द्विकासभाग—क., विभाग—ख. । ७. 'विति'''विस्पष्मा' नास्ति—ग. । ८. तुर्याभाग—क. । ९. येनांशेन—क. । १०. षोडशांसौ—ग. । ११. 'विभक्तौ'''भागा' नास्ति—ग. । १२. वेकांशेन वर्जितौ कुर्यादिति—क., द्व्यंशवर्जितौ द्वयेनांशेन वर्जितौ—ग. । १३. त्यक्तेनांश—क. ग. । १४. पञ्चमभागमावर्जित-तुरीय—ग., 'मध्यभाग'''न्त्यशब्दः' इत्यस्य स्थाने 'मध्यत्रयं त्र्यश्रत्रयमाह—तृतीयस्येति । अनेनान्वितोऽन्तशब्दः' इति पाठः—ख. । १५. 'मध्य' नास्ति—ग. । १६. त्यर्धपदेन—क. । १७. अस्त्र—क. ।

1. "द्वाभ्यामंशाभ्याम्" (पृ. ४५) इति सेतुबन्धे ।
2. एकेनांशेनेति । अष्टस्वेकः षोडशसु चैक इति प्रत्येकमेकैकेन, संभूय द्वाभ्यामंशाभ्यां वर्जिताविमौ भागौ कुर्यादित्यभिप्रायः ।
3. "यत्तु तृतीयद्वयोरर्थांशाष्टके पञ्चमयोस्त्वंशषोडशके च द्वौ द्वावंशौ पार्श्वद्वयेन न्यूनौ कुर्यादिति व्याख्यानं तत्प्रमाणान्तरेण भूयो विसंवादापत्तेरुपेक्षितम्" ( से. पृ. ४६ ) ।
4. "अन्ये त्वन्तशब्दस्तृतीयस्येत्यनेनान्वयदशायां प्रान्तपरः । द्वितीयाद्याभ्यामन्वयदशायां समीपपर इत्याहुः" ( से. पृ. ४६ ) ।

आपञ्चमादधःस्थानां त्रयाणां चान्ततो नयेत् ।[1]
भौमे प्राथमिके सूत्रे विश्रान्तं च तृतीयके ॥ ६५ ॥
सूत्रद्वयं चान्य[तस्तु][2] त्र्यस्राण्येवं भवन्ति षट्[1] ।
चतुर्दशारं[3] देवेशि दशारं चात्र सिद्ध्यति ॥ ६६ ॥

द्वितीयस्य चाद्यस्य चेत्येताभ्यामन्तशब्दः समीपवचनः । आस्फालनीयसूत्रमर्मानुगुणस्थान इत्यर्थः । ब्रह्मस्थाने एकभागीकृतस्य महामध्यकोऽस्य[4] पुनर्विकासरूपस्य प्रतिष्ठीकृतस्य, पश्चिमतः परित्यक्तमहात्र्यश्राद् बहिर्यवैकमात्रे ।[6] अयमर्थः—प्रसृतेषु सप्त[7]सूत्रेषु मध्ये पूर्वतस्तृतीयद्वितीयाद्यसूत्राणां त्रयाणामन्तरेषु सूत्राण्यावध्य ब्रह्मसूत्रपश्चिमाग्र[10]भ्रमरेखायां तदनन्तरस्थसप्तमसूत्रमध्यभागे महोपह्वर[11]ब्रह्मस्थाने च सूत्रद्वयाग्राणि यथा[12] भवन्ति, तथा[13] प्रसारयेदिति । आपञ्चमेत्यर्धपद्यं पश्चिमतः[14] पूर्वाग्रं त्र्यश्रत्रयमाह । अयमर्थः[15]—प्रसृतेषु सूत्रेषु मध्ये पूर्वतः पञ्चमसूत्रमारभ्य पश्चिमतोऽवस्थितानां[16] त्रयाणां सूत्राणां पूर्वदलेषु[17] सूत्राण्यावध्य ब्रह्मसूत्रप्रागग्रभ्रमरेखायां तदनन्तरस्थप्रथम[18]सूत्रमध्यभागे तदनन्तरस्थतृतीयसूत्रमध्यभागे[19] च सूत्राग्राणि यथा भवन्ति तथा प्रसारयेदिति । एवं कृते त्र्यश्रषट्कं संपद्यते । आद्या शक्तिराद्यं वह्निपुरं[20] च कर्णिकाभ्रमसंश्लेषीति चक्रराजस्येयं महोपनिषत् । [2][21]शक्त्या-शक्ति-

१. एषा षड्क्तिर्न दृश्यते—वाक. ख. । २. द्वयं चान्यत्—वाक. ख. ग. । ३. चतुर्दशारमित्येवं दशारं च प्रसिद्ध्यति—वाक. ख. ग. । ४. कर्मा—ख. । ५. ध्वस्यापु—ख. ग. । ६. इतः परम्—'यवैकमात्रे' इत्यधिकः पाठः—क. । ७. 'सप्त' नास्ति—क. ग. । ८. मध्यात्—ख. नास्ति—क. । ९. मन्तेषु—क. ग. । १०. मभ्रमशिखाया—क. । ११. महोपह्वत—क., महापश्चाद्—ख. महोपर—ग. । १२. यदा—ख. । १३. तदा—ख. । १४. पश्चिमतः पूर्वाग्रत्र्यस्रसूत्रद्वयमाह—क., ऊर्ध्वचतुस्सूत्रात्मयमाह—ख. । १५. 'अयमर्थः' नास्ति—ख. । १६. तोऽधः—क. ख. । १७. पश्चिमदलेषु—ख. पूर्ववदन्तेषु—ग. । १८. ब्रह्म—ख. । १९. 'तदन···भागे' नास्ति—ख. । २०. द्वयं—क. । २१. 'शक्त्या···द्रष्टव्यम्' नास्ति—ख. ।

1. "वस्तुतस्त्र्यस्राण्येवं भवन्ति षट् इत्यृजुर्विमर्शिन्युक्त एव पाठः साधुः" (से. पृ. ४७) ।
2. "शक्त्या शक्तिम्" ( १।२९ ) इत्यादिना प्रतिपादिते प्रथमे चक्रनिर्माणविधावप्येवं द्रष्टव्यमिति यावत् ।

सूत्राद् द्वितीयकात् षष्ठाद् ब्रह्मसूत्रस्य पार्श्वयोः ।
सूत्रद्वयद्वयं देयमधऊर्ध्वक्रमात्मकम् ॥ ६७ ॥
तत्कोटिसंगतं पश्चात् सूत्रयुग्मं प्रसारयेत् ।
दशारं देवि संसिद्धमेतच्चक्रं तृतीयकम् ॥ ६८ ॥
सूत्रात् पञ्चमकान्मध्यादन्यत् सूत्रद्वयं नयेत् ।
ऊर्ध्वाधोमुखमध्यस्थव्यस्त्रमर्मद्वयावधि ॥ ६९ ॥
दद्यात् तृतीयकं सूत्रं तयोरन्योन्यसंगतम् ।
एवं चतुर्थमष्टारं मध्ययोनिश्च पञ्चमी ॥ ७० ॥

---

क्रमेऽप्येव द्रष्टव्यम् । एतावति कृते चतुर्दशारनिष्पत्तिः सम्पन्नेत्याह—चतुर्दशारमिति । सूत्राद् द्वितीयकादिति द्वाभ्यां पुनर्दशारमाह । द्वितीयकात्[1] पूर्वतो द्वितीयकात् सूत्रात् । षष्ठात् पूर्वतः षष्ठात् सूत्रात् । ब्रह्मसूत्रस्य प्राक्प्रत्यङ्निहितस्य महासूत्रस्य । तत्कोटिसङ्गतम् अधऊर्ध्वक्रमात्मकं विन्यस्य सूत्रद्वयाग्रसङ्गतम् । अयमर्थः—पूर्वतो द्वितीयसूत्रमध्यभागमारभ्य ब्रह्मसूत्रस्य पक्षयोरनन्तरकोणक्लृप्तदशारकोणद्विरेखावधि पूर्वाग्रं सूत्रद्वयं प्रसार्य पुनस्तत्तत्सूत्राग्रावलम्बनेन दक्षिणोत्तरतः सूत्रद्वयं प्रसारयेदिति । एवं कृते पुनर्दशारं सम्पन्नमित्याह—दशारं देवीति । सूत्रात् पञ्चमकादित्यर्धपद्यमष्टारं मध्ययोनिं चोत्पादयति । पञ्चमकात् पूर्वतः प्रसृतपञ्चमसूत्रात् । मध्यात् मध्यमभागात् । अथ विन्यासक्रमः—पूर्वतः पञ्चमसूत्रमध्यभाग-

---

१. द्वय—वाक. ख. ग. । २. प्रसारितम्—वाक. ख. । ३. एमेव कथितं चक्रमेतत्—वाक. ख. । ४. सूत्राग्रात् पञ्चमादूर्ध्वम्—वाक. ख. । ५. एमेकारं चात्र पञ्चमम् । इति संसिद्ध्यते चक्रं कर्णिकान्तर्गतं समम्—वाक ख. । ६. मेणेद—क. । ७. एव—क. । ८. दशारचतु—क. ख. । ९. मित्याह—क. ख. । १०. सूत्रतो—क. । ११. यमू—क. ख. । १२. ताध—क. ख. । १३. पश्चिमाग्र—क. । १४. इत परम्—'पूर्वतः षष्ठसूत्रमारभ्य ब्रह्मसूत्रस्य पक्षयोरन्तरक्लृप्तदशारकोणद्विरेखावधि पूर्वाग्रं सूत्रद्वयं' इत्यधिकः पाठः—क. । १५. विस्तार—क । १६. 'पूर्वतः' नास्ति—ख. ।

1 "ऋजवस्तु—द्वितीयसूत्रस्य षष्ठसूत्रस्य यो मध्यभागस्तस्य ब्रह्मसूत्रस्पृष्टत्वात्तत्पार्श्वयोरित्यनेन तन्त्रेण वह्निप्राक्कोणशक्तिप्रत्यक्कोणयोरेव स्थाननिर्देश इति व्याचक्षते" (से. पृ. ४७) ।

अरुणा तु[1] तवर्गस्था पवर्गे जयिनी स्थिता[2] ।
सर्वेश्वरी यवर्गे तु शवर्गे कौलिनी[3] तथा ॥ ७९ ॥
एता वर्गाष्टके सम्यग[4]ष्टावेव हि देवताः ।
अर्चिताः पुरुषस्याशु प्रकुर्वन्ति वशं[5] जगत् ॥ ८० ॥
उद्धरेत् प्रथमं रेफं तदधः कुटिलान्तकम्[6] ।
तदप्यवनिबीजस्थं षष्ठस्वरसमन्वितम् ॥ ८१ ॥
ऊर्ध्व[7]मर्धेन्दु[8]बिन्द्वाढ्यं कारयेत् परमेश्वरि ।
एतत्[9] वशिनीबीजं योगिनीनां मुखे स्थितम् ॥ ८२ ॥

---

वर्णं च यथायोगं संश्लेषयति । सम्यग् अविपर्यस्तत्वेन ॥ ७७-८० ॥

उद्धरेदित्यादिपञ्चदशभिर्वशिन्यादिवाग्देवताष्टकस्य बीजाष्टकं क्रमेण [10]कथयति । तदधः [11]तस्याधस्तात् । [12]कुटिलान्तकम् । कुटिल. फकारस्तस्यान्तकं [13]बकार:, तद् बकार[14]बीजम् । [15]अवनिबीजं लकारः । षष्ठस्वर ऊकार. । [16]ऊर्ध्वं शिर: । अर्धेन्दुः कला । बिन्दुरनुस्वार. ॥ ८१-८२ ॥

---

इष्टदेवता वशिन्यादयः साधकेनार्चितास्तस्य वशे जगत् कुर्वन्तीत्यर्थः ॥ ७७-८० ॥

उद्धरेत् प्रथममित्यादि शृणु विद्याङ्गरूपिणीमित्यन्तस्यायमर्थः—आदौ रेफं[19] वह्निं समुद्धृत्य तदधः कुटिलान्तगमिति । कुटिलः फकारः, तस्यान्तगं [19]बकारमुद्धरेदित्यर्थः । तदप्यवनिबीजस्थमिति । तदुद्धृताक्षरद्वयं [20]लकारस्थित कुर्यात्, यथा भवति तथोद्धरेदित्यर्थः । षष्ठस्वरसमन्वितमिति । ऊकारसमन्वितमिति यावत् । ऊर्ध्वमर्धेन्दु-

द्वितीयवर्गप्रथममिन्द्रारूढं महेश्वरि ।
अधस्तान्नाभसं बीजमाग्नेयस्थं समुद्धरेत् ॥ ८३ ॥
चतुर्थस्वरसंयुक्तं बिन्दुखण्डेन्दुलङ्कृतम् ।
एतत्कामेश्वरीबीजं त्रैलोक्यक्षोभकारकम् ॥ ८४ ॥

---

द्वितीयवर्गप्रथमं ककारः । इन्द्रो लकारः । नाभसं बीजं हकारः । आग्नेयो रेफः । चतुर्थस्वर ईकारः ॥ ८३-८४ ॥

---

बिन्द्वाद्यमिति । उद्धृतवर्णचतुष्टयस्य शिरसि अर्धेन्दुं कृत्वा बिन्दुरनुस्वार एतद्द्वयमुद्धरेदित्यर्थः । यथा ब्लूँ । एतद्वशिनीबीजं योगिनीनां मुखे स्थितमिति । [1]योगिनीभिः सदा जप्तमित्यर्थः ॥ ८१-८२ ॥

द्वितीयवर्गप्रथममिति । द्वितीयवर्गः कवर्गस्तस्य वर्गस्य प्रथमाक्षरः ककारः । ऐन्द्रारूढमिति लकारारूढमित्यर्थः । अधस्तान्नाभसं [3]बीजमिति । तदनन्तरं हकारमुद्धरेदित्यर्थः । आग्नेयस्थं समुद्धरेदिति । आग्नेयो रेफः । तत्स्थान्युद्धृतानि वर्णानि यथा भवन्ति तथा कुर्यादित्यर्थः । चतुर्थस्वरसंयुक्तं बिन्दुखण्डेन्दुलङ्कृतमिति । चतुर्थस्वर ईकारः, बिन्दुरनुस्वारः, खण्डेन्दुरर्धचन्द्रः । एतत्त्रितयमुद्धृतबीजानामुपरि कुर्यादिति यावत् । एतत्कामेश्वरीबीज त्रैलोक्यक्षोभकारकम् । कामेश्वरीबीजमित्यर्थः । यथा क्लह्रीँ ॥८३-८४॥

---

१. वर्गात्–वाक. ख. ग. । २. मैन्द्रा–वाक. ख. ब. अ. । ३. चछाम्भवं–सक. । ४. खण्डद्वय कृतम्–ब., नादविभूषितम्–सक. । ५. 'कवर्ग.' नास्ति–क. ग. घ. छ. ज. । ६. 'वर्गस्य' नास्ति–क. ग. घ. छ. । ७. एतत्त्रय–ख. । ८. कुर्यादित्यर्थः–क. ग. छ. ।

1. "तदिदं योगिनीना तद्वाचकवशिनीपदस्य मुखे स्थितमारम्भे प्रयोज्यम् । इदमुपलक्षणं कामेश्वर्यादिबीजानामपि तत्तद्वाचकपदारम्भे प्रयोक्तव्यतायाः ।...योगिनीनां वशिन्यादिबीजाष्टकस्य मुखे स्थितं तेषु प्रथममित्यर्थं इति केचित् । योगिनीभिर्जप्तमित्यर्थं इत्यन्ये" (से. पृ. ५२)

2. "नाभसबीजाग्नेयशब्दा व्यञ्जनमात्रपरा इत्यपि केचित्" (से. पृ. ५३) ।

अरुणापञ्चमस्याधो वारुणं विनियोजयेत्[1] ।
तदधोऽपीन्द्रबीजं तु सर्वोर्ध्वमिपरं प्रिये ॥ ८५ ॥
एतत्तन्मोदिनीबीजं[2] सर्वसत्त्ववशङ्करम्[3] ।
वायव्यमिन्द्रबीजस्थं षष्ठस्वरसमन्वितम् ॥ ८६ ॥
अर्धेन्दुमस्तकाक्रान्तं बिन्दुना[4] परिभूषितम्[5] ।
एतत्ते[6] कथितं देवि विमलाबीजमुत्तमम्[7] ॥ ८७ ॥
सर्वपापक्षयकरं सर्वोपद्रवनाशनम् ।

अरुणापञ्चमो नकार । वारुणं वकार । इन्द्रबीजं लकार । इपरम् ईकार । कलाबिन्दू चात्राध्याहार्यौ ॥ ८५-८६ ॥

वायव्यं यकार । सर्वपापं देहादिसङ्कुचितकर्तृत्वम् । उपद्रवो विकल्पबुद्धि ॥ ८६-८८ ॥

---

अरुणापञ्चमस्याधो वारुण विनियोजयेदिति । [11]अरुणावर्गस्तवर्गस्तस्य पञ्चमो नकारस्तस्याधो [12]वारुण वकार विनियोजयेदित्यर्थ. । तदधोऽपीन्द्रबीज इति । उद्धृत[13]वकारस्याधोदेशे इन्द्रबीज लकार योजयेदित्यर्थ । सर्वोर्ध्वमिपर प्रिये इति । एवमुद्धृताक्षर[14]त्रयस्योपरि ईकार[15]मुद्धरेत् तथा बिन्दुकलान्वितं च कुर्यात् । एतन्मोदिनीबीजम् । यथा न्ल्व्रीँ ॥ ८५-८६ ॥

वायव्यमिन्द्रबीजस्थमिति । वायव्य यकार । इन्द्रबीज लकार । [16]षष्ठस्वरसमन्वितम् ऊकारसमन्वितम् । अर्धेन्द्वित्यादि । [17]अर्धेन्दु कला, बिन्दुरनुस्वार, ताभ्या विभूषित[18] कुर्यादित्यर्थ. । एतत्ते कथित देवि विमलाबीजविग्रहमिति । [19]एवमुद्धृत बीज विमलारूपमित्यर्थ । यथा ल्व्यूँ ॥ ८६-८८ ॥

---

१. तदध शक्तिबीज च सर्वान्तमिपर प्रिये–सक । २. एतत्तु–सल. ग घ । ३. मरव–शाक स अ. । ४. ज तु–सक., ज स–सल. । ५. नोपरि–याग. से. अ. सत्र ग. घ, कलाबिन्दुविभू–अ. । ६. शोभितम्–सक. । ७. एतत्तु–सल. । ८. विग्रहम्–अ से. सक घ. । ९. 'लकार । इपरम्' नास्ति–ग. घ । १०. वाभ्या–ख । ११. तस्य पञ्चमो–क ग. घ. छ. । १२. 'वारुण' नास्ति–क. ग. घ छ । १३ बीजस्या–ल इ अ । १४. 'त्रय' नास्ति–क. ग. घ । १५ रं विनियोजयेत्–स. इ. अ. । १६. षष्ठस्वरसमन्वित स्वकारस्याधोऽपि ऊकारो देय –क. घ., षष्ठस्वर ऊकार, अकारस्य स्थाने ऊकार एवा भवति तथा कुर्यादित्यर्थ –स. इ. अ. । १७ 'अर्धेन्दु' नास्ति–क. ग घ. छ. । १८. भूषितं क– ल. इ अ. । १९. एतदुक्तं बीज विमलाविग्रहमित्यर्थ –क. ग. घ. छ ।

जकारं[1] कालमारूढं तदधो ज्वलनाक्षरम् ॥ ८८ ॥
चतुर्थस्वरसंभिन्नं[2] बिन्दुनादसमन्वितम्[3] ।
एतत्त्[4]दरुणाबीजमरुणं सर्वमोहनम् ॥ ८९ ॥
शिवबीजं तदादिस्थमधस्तादैन्द्रवारुणौ[5] ।
वायव्यमुपरोद्भिन्नं[6] संयोज्य परमेश्वरि ॥ ९० ॥
जयिनीबीजमेवेदं नादबिन्दुविभूषितम्[7] ।

---

कालो मकारः । ज्वलनो रेफः ॥ ८८-८९ ॥

शिवबीजं हकारः । तदादिस्तस्य हकारस्यादिः, सकार इत्यर्थः[8] । ऐन्द्रं[9] लकारः । व[ा]रुणो वकारः । उपर ऊकारः ॥ ९०-९१ ॥

---

जकारं कालमारूढमिति ।[10] कालो मकारः,[11] तं जकारस्याधः कुर्यादिति यावत् । तदधो ज्वलनाक्षरमिति । भकारस्याधोदेशे[12] रेफं संपादयेत् । चतुर्थस्वरसंयुक्तमिति । चतुर्थस्वर ईकारः, तेन[13] संयुक्तं यथा भवति शिरस्थानं तथा कर्तव्यमित्यर्थः । एतच्चतुः[14]पिण्डात्मकमरुणाबीजम् । अरुणाबीजं समस्तं जगन्मोहयितुं समर्थम् । यथा ज्म्रीँ ॥८८-८९॥

शिवबीजमित्यादि । शिवबीजं हकारस्तदादिस्थं सकारम् । हकारस्याधः सकारः कर्तव्य इत्यर्थः । तादृशस्य[15] सकारस्याधोदेशे इन्द्रवारुणौ इन्द्रो लकारः, वारुणं वकारः, तदुभयमुद्धरणीयम् । वायव्य यकारः । उपरोद्भिन्नम् उकारात्[16] परस्थित ऊकारस्तत्संबद्धं कुर्यात् ।[17] उद्धृतषडक्षराणां संयोजनमेकीकरणं विधाय नादबिन्दुविभूषित कुर्यात् । एतज्जयिनीबीजं षट्पिण्डात्मकं[18] सर्वरोगभयापह[19] सर्वेषामारोग्याभयङ्करमित्यर्थः[20] । यथा ह्स्ल्व्य्रूँ ॥ ९०-९१ ॥

---

१. भान्तं जकार–व. । २. संयुक्तं–त्राग. अ. से. ब. सक. ख. ग. घ. । ३. विभूषि–सख. ग. । ४. देवा–सग. । ५. धः सोमेन्द्रवारुणे–सक., धस्ताच्चे–से. सख. ग., धस्तादि–अ. सघ. । ६. मूप–ब., मूस्व–सक. । ७. सर्वरोगभयापहम्–अ., कला–वाग. से., बिन्दुनाद–ब. । ८. 'इत्यर्थः' नास्ति–क. । ९. 'ऐन्द्रं···वकारः' नास्ति–ख. ग. घ. । १०. 'जकाराक्षरं कालमारूढं' अधिकः पाठः–ख. ङ. ज. । ११. 'त' नास्ति–क. ग. घ. छ. । १२. 'देशे' नास्ति–क. ग. ङ. छ. । १३. तेन संयुक्तं कुर्यात् । बिन्दुनादसमन्वितं कुर्यात् । यथा ज्म्रीं–क. ग. छ. । १४. चतुर्वर्णा–ख. ङ. ज. । १५. दास–क. ग. घ. । १६. उकारात् परमूकारम् । उद्धृत–क. ग. छ. । १७. 'उद्धृत···कुर्यात्' नास्ति–ख. ङ. ज. । १८. खण्डा–ज. । १९. भयहरं–क. ग. छ. । २०. सर्वेषां प्रियकरमित्यर्थः–क. ग. घ. छ. ।

उद्धरेन्मोदिनीवर्गचतुर्थं परमेश्वरि ॥ ९१ ॥
अधः कालाग्निवायव्यान् क्रमेण विनियोजयेत् ।
दीर्घायुर्बीजसंयुक्तान् यथानुक्रमयोगतः ॥ ९२ ॥
उपरीश्वरबिन्द्वन्तानेकत्रै सुरसुन्दरि ।
एतत्सर्वेश्वरीबीजं सर्वत्रैवापराजितम् ॥ ९३ ॥

---

मोदिनीवर्गचतुर्थो झकार । दीर्घायुर्बीजम् । अमरेश्वरीबीजत्वादायुर्बीजमुकार., दीर्घायुर्बीजमूकार । ईश्वर. कला ॥ ९१-९३ ॥

---

उद्धरेन्मोदिनीवर्गेत्यादि । मोदिनीवर्गश्चवर्गस्तस्य चतुर्थो झकारस्तं झकार प्रथममुद्धरेत । अध कालाग्निवायव्यान् क्रमेण विनियोजयेदिति । कालो मकार, अग्नी रेफ, वायव्यो यकार: । तेन क्रमेण झकारस्याधोदेशे योजयेदित्यर्थ । दीर्घायुर्बीजसयुक्तानिति । दीर्घायुर्बीजमूकार दीर्घरूपम्, तदादाय पूर्वोक्तान् वर्णान् तेन संयुक्तान् यथानुक्रमयोगेन कुर्यादित्यर्थ । उपरीश्वरबिन्द्वन्तानिति । ईश्वरो नादः । बिन्दुरनुस्वार । समस्तानेतान् एकत्र सयोजयेत् । एकबीजतां नयेदित्यर्थः । एतत्सर्वेश्वरीबीजमिति । एतदुद्धृत सर्वेश्वरीबीजं पञ्चपिण्डात्मक सर्वाणि सत्वानि साधकस्य वशे करोतीत्यर्थ । यथा झ्म्र्यूँ ॥ ९१-९३ ॥

१. बीज-अ., वर्ग-से, वर्गाच्च-ब. सल. ग । २. चैव-सल. । ३. दीर्घेन्दु-ब., दीर्घोकारसमा-सघ । ४. बिन्दूना-ब., बिन्द्वाढ्य-सग., बिन्द्वन्त-सल. । ५. मेकत्रापि तथैव च-ब. सघ., मेकत्रापि नियोजयेत्-सग., मेकत्र विनियोजयेत्-याग. अ. से. सक. स. । ६. सर्वमरवशाङ्कुरम्-अ । ७. दीर्घापुर्बीजममरेश्वरत्वादयो बीजमुकार-क., दीर्घायुर्बीजमूकार । ईश्वरः कला-ग. । ८. अध-ख. घ. ङ. ज. । ९. 'इति' नास्ति-क. ग. छ । १० तेन प्रकारेण क्रमेण पूर्वोक्तझकार-ख घ. ङ ज । ११. दीर्घरूपमादाय पूर्वोक्तवर्ण तेन सयुक्त यथा-ख ङ. ज । १२. उद्धृतमेतद्रूप-ख. ङ ज, एतदुद्धृत बीजमिति । एतदुद्धृत बीज-घ. । १३. यथा-ज. ।

कौलिनीपञ्चमं देवि कालवीजोपरि स्थितम् ।
सर्वाधस्तादपि तथा वह्निबीजं नियोजयेत् ॥ ९४ ॥
चतुर्थस्वरसंयुक्तं बिन्दिन्दुसमलङ्कृतम् ।
एतद्बीजवरं भद्रे कौलिनीरूपमास्थितम् ॥ ९५ ॥

कौलिनीपञ्चमं क्षकारः । वह्निबीजं रेफः । बीजानि [1]सुभगोदये लिखितानि ॥ ९४-९५ ॥

---

कौलिनीपञ्चम देवीति । [2]कौलिनीवर्गः शवर्गस्तस्य पञ्चमं क्षकारस्तमुद्धरेत् । कालवीजोपरि स्थितमिति[3] । कालवीजं मकारस्तदुपरि तच्छिरसि स्थितं यथा भवति तथा कुर्यादित्यर्थः । सर्वाधस्तादपि तथेति । उद्धृताक्षरादधोदेशे वह्निबीजमिति रेफस्तं नियोजयेत् । चतुर्थस्वरसंयुक्तं चतुर्थस्वर ईकारस्तेन संयुक्तं कुर्यादित्यर्थः । नादेन्दुसमलङ्कृतमिति । चन्द्रनादान्वितं कुर्यादित्यर्थः । एतदुद्धृतं बीजवर कौलिनीबीज[12] चतु पिण्डात्मकमित्यर्थः । यथा क्ष्म्रीं[13] ॥ ९४-९५ ॥

---

१. तथा—सख. । २. बीजं वह्नेः—सग. । ३. नादे—थाग. अ. से. सग. घ., बिन्दुनादविभूषितम्—सर., बिन्दुलक्षेन्दुलङ्कृतम्—सत. । ४. वरे—थाग. से., अं परं—सघ. । ५. बीज—ख. । ६ माश्रितम्—ख, समस्थितम्—सण. । ७. 'इति' नास्ति—क. ग. ङ. । ८. 'तच्छिरसि' नास्ति—क. ग. । ९. येदित्यर्थ.—ग. ङ. ज. । १०. 'चतुर्थस्वरसंयुक्तं' नास्ति—क. ग. छ. । ११. बीजं परं—ख. घ. । १२. चिपर्ं—क. ग. छ. । १३. तथा—ज. ।

1. शिवानन्दविरचितः सुभगोदयोऽत्रैव परिशिष्टे प्रकाश्यते । तत्रैमानि बीजानि द्रष्टव्यानि । एवमेवाग्रेऽपि सुभगोदयनाम्ना निर्दिष्टा विषयास्तत्रैवान्वेषणीयाः । अर्थरत्नावल्यामनीमानि बीजाण्युद्धृतान्यत्रैवावलोकनीयानि । वामकेश्वरीमतविवरणे सेतुबन्धे च तथैव ।
2. "यत्तु कौलिनीवर्गः शवर्ग इति [illegible] व्याख्यानं तच्चम्मे कौलिनीति पूर्वपक्षचिन्त्यम्" (से. पृ. ५६) । अत्र शवर्ग इत्येव पाठो [illegible] सर्वासु मातृकासु । तेन "[illegible]" (से० पृ० ५१) [illegible] ।

एवमेतानि बीजानि क्रमादष्टौ महेश्वरि ।
कथितानि [2]मयेदानीं शृणु विद्याङ्गरूपिणी[3]म् ॥ ९६ ॥
[4]करशुद्धिकरीं विद्यां तथाङ्गन्याससंस्थि[5]ताम् ।
आत्मासन[6]गतां [7]चापि तथा चक्रा[8]सनस्थिताम् ॥ ९७ ॥

---

एवमादि मयान्तेन वृत्तानुवादः क्रियते । इदानीं शृणु विद्याङ्गरूपिणी-[9]मित्यनेन भागेन [10]सह सूत्रद्वयेन वक्ष्यमाणविद्योद्देशः क्रियते । विद्याङ्गरूपिणीं [11]प्रधानविद्याया अङ्गरूपिणी विद्यां शृण्वित्यर्थः ॥ ९६ ॥

[12]करशुद्धिकरीं स्पृष्टपदार्थविशुद्धयर्थमङ्गुलितलशोधिनी[13] विद्यामित्यर्थः । अङ्गन्याससंस्थिताम् । अङ्गन्यासः षडङ्गविधिः । मूलविद्यां शृणु प्रिये ! इति ।

---

एवमेतानीत्यादि । [14]एवमुक्तप्रकारेण । एतानि बीजान्यु[15]द्धृतानि क्रमात् । [16]यथानुक्रमेण अष्टौ [17]अष्टसंख्याकानि । हे [18]महेशानि ! प्रकाशितानीत्यर्थः ।

शृणु विद्याङ्गरूपिणीमित्यारभ्य एवमेतस्य चक्रस्य साधकोऽर्चां समारभेदित्यन्तस्य व्याख्या लिख्यते । हे [19]देवि ! शृणु श्रोतुमर्हसि । विद्याङ्गरूपिणीमिति । मूलविद्याया अङ्गरूपिणीं[20] विद्यां शृण्विति समुदायोक्तिः ॥ ९६ ॥

पुनर्विशेषतस्तासामङ्गविद्यानां नामानि निर्दिशति शिवः—करशुद्धिक[21]रीं विद्यामिति । करस्थस्य पूजोपकरणद्रव्यस्य स्पर्शयोग्यतामापादयति या विद्या सा [22]करशुद्धिकरी विद्येति । तथाङ्गन्यासरूपिणीमिति । अङ्गन्यासे विनियुक्ता या विद्या सा अङ्ग-

**सर्वमन्त्रासनगतां साध्यसिद्धासनस्थिताम् ।**
**देव्यावाहनविद्यां च मूलविद्यां शृणु प्रिये ॥ ९८ ॥**
**वाग्भवं प्रथमं देवि कामराजं द्वितीयकम् ।**

---

मूलविद्याम् अङ्गिविद्याम् । शृण्वित्यत्र पुनराख्यातं श्रोतृजनप्रवृत्त्यर्थम् । प्रिये इत्यामन्त्रणं योग्यताप्रदर्शनम् । यच्छ्रुतिः—

[1]ब्रह्मचारी धनदायी मेधावी श्रोत्रियः प्रियः ।
विद्यया वा विद्या यः प्राह तानि तीर्थानि षण्मम ॥ इति ॥९७-९८॥
(सं० ब्रा० ३)

वाग्भवमिति सार्धेकेन सूत्रेण करशुद्धिकरी विद्यामाह । प्रथमम् अहं-विमर्शप्रथमकलानुत्तराक्षरम् । वाग्भवमिति वाचा प्रसवस्थानम् । अनुत्तरा-

---

न्यासरूपिणी विद्या । आत्मासनगतां[10] चापीति । देवीरूपस्य साधकस्य आत्मासने [11]विनि-युक्ता या[12] विद्यते । तथा चक्रासनस्थितामिति । चक्रासने विनियुक्ता सा चक्रासन-स्थितेत्यर्थः । [13]सर्वमन्त्रासनगतामिति । सर्वमन्त्राणामासने विनियुक्तामित्यर्थः । साध्य-सिद्धासनस्थितामिति । तथा साध्यसिद्धासनस्थिता या विद्या । ताः सर्वाः शृण्वित्यर्थः । देव्यावाहनविद्या चेति । देव्याः श्रीमहात्रिपुरसुन्दर्या आवाहनविद्यां शृण्वित्यर्थः । मूलविद्यां शृणु प्रिये ! इति । हे[14] प्रिये ! समस्तजगदुत्पत्तिस्थितिलयहेतु[15]परमशिवात्मशक्तेः [16]परमानन्दभासात्मिकायाः श्रीमहात्रिपुरसुन्दर्या वाचिका वि[17]द्या समस्तविद्यादिभूता या मूलविद्या तां शृण्वित्यर्थः ॥ ९७–९८ ॥

---

१. द्यापि–ते. । २. सु–सग. । ३. द्यामपि–चाक. ख. । ४. बीजं–सग. । ५. शृण्विति–क. । ६. त्रणं–ख. घ. । ७. 'प्र' नास्ति–क. ख. । ८. यो ह्याह–क. । ९. सार्धेन सूत्रेण–क., सार्धेनैकेन–ख. । १०. गता–ख. ग. ङ. ज. । ११. 'वि' नास्ति–क. ग. । १२. सा तथेति–ख. ङ. ज. । १३. 'सर्व'' स्थितामिति' नास्ति–ख. ङ. ज. । १४. 'हे प्रिये' नास्ति–ख. घ. ङ. ज. । १५. हेतु–ख. ङ. ज. । १६. शिवात्मशक्तिः–ज., शिवात्मिकाया.–क. ग. छ. । १७. 'परमानन्दभासात्मिकाया.' नास्ति–क. ग. छ. । १८. 'विद्या समस्त' नास्ति–क. ग. घ. छ. ।

1. तुलनीयम्—"गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या चतुर्थं नास्ति साधनम् ॥" इत्यनेनाभाणकेन ।

शान्तान्तं कादिसंयुक्तमैकारान्तान्तयोजितम् ॥ ९९ ॥
एषा विद्या महेशानि[2] करशुद्धिकरी स्मृता[3] ।

देव सर्ववर्णोत्पत्तिरित्युपह्वरम् । अत्राभियुक्तोक्तिः—

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ।
हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः ॥
अनयोः सामरस्यं यत् परस्मिन् महसि स्फुटम्[4] ।
अवर्णः सर्ववर्णानां व्यापकस्त्रिविधः[5] स्मृतः ॥ इति ।

श्रीसिद्धामतेऽपि[6]—

[1]सात्र[7] कुण्डलिनी बीजं[8] जीवभूता चिदात्मिका ।
तज्जं[9] ध्रुवेच्छोन्मेषाख्यं त्रिकं वर्णास्ततः पुनः ॥ इत्यादि ।

रहस्यमपि—"अकारो वै सर्वा वाक्" ( ऐ० आ० २।३।६ ) इति, "अ इति ब्रह्म तत्रागतमहम्[10]" ( ऐ० आ० २।३।८ ) इति, "छन्दःपुरुष इति यमवोचामाक्षरसमाम्नाय[11] एव तस्यैतस्याकारो रसः" ( ऐ० आ०

करशुद्धिविद्येत्यादि मूलविद्यान्तं यथाक्रमेण निर्दिष्टानां विद्यानां[12] क्रमेणोद्धारं दर्शयत्युत्तरैः[13] श्लोकैः । तत्र प्रथमं करशुद्धिविद्योद्ध्रियते—वाग्भवं प्रथमं देवीत्यादिना । वर्णक्रमस्य प्रथममक्षरं सबिन्दुकमबिन्दुकं वा[14] करशुद्धिविद्याया आद्यं बीजम् । तदेव वाग्भवमित्युच्यते । तथा वर्णक्रमस्य द्वितीयमक्षरमाकारं करशुद्धिविद्याया द्वितीयं बीजम्[15] । तदेव कामराजसंज्ञकम् । शान्तान्त शकारस्यान्तं षकारस्तस्यान्तं सकारस्तं विसर्गसंयुक्तं[16] कुर्यात् । ऐकारान्तान्तयोजितम् । ऐकारस्यान्तमोकारस्तस्यान्त-

१. सपुनम्—ख. ग. । २. महाविद्या—ख., महादेवि—ग. । ३. परा—ख । ४. त्रिपुरा—क. । ५. कः स त्रिधा—क. । ६. श्रीसिद्धान्तमते—क., श्रीमदोड्डामरेऽपि—ख., श्रीसिद्धामृते—वि, सिद्धयोगीश्वरीमते—ग. । ७. मात्रा—क. ख. ग. घ. । ८. बीज—वि. । ९. तज्जीव इच्छोन्मेषाख्यस्त्रिधा—क. ख. ग. घ. । १०. तत्रागमनमहमिति छन्द—ग. घ । ११. यमवाचामा—ग. घ. । १२. मूलविद्यानां—ख. । १३. सारश्लोकैः —क. ग. छ. । १४. सबिन्दुकं वा पर—ड. ज. । १५. 'बीजम्' नास्ति—क. ग. घ. छ. । १६. विसर्गयु—ग. घ. ।

1 तन्त्रालोके (३।२२०–२२१) सिद्धयोगीश्वरीमतरयार्थानुवादमुखेन पठितोऽयं श्लोकः ।

ऐ-ओमध्यगतं बीजं[1] वाग्विधानाय केवलम् ॥ १०० ॥
रुद्रयामलतन्त्रे[2] तु निर्दिष्टं परमाक्षरम् ।

३।२।३ ) इति च । एवमनुत्त[3]रप्रसरत्वं विश्वस्य विश्[4]वत्र प्रकाशितम्[5] । इत्यमनुत्तरस्य वाग्भवत्वमभिधाया[6]नन्दस्य कामराजसंज्ञत्वमाह—कामराजं द्वितीयकमिति । द्वि[7]तीयकम् आनन्दः शिवस्तद्बीजं कामराजसंज्ञम्[8] । "प्रसरन्ती आनन्दरूपा सती" (शि० वि० पृ० ६०) इत्यत्र म[9]हासमृद्धिरूपानन्दात्मना व्याख्यातत्वात् । अनुत्तरानन्दौ स[10]बिन्दुकाविति सम्प्रदायः । शान्तान्तमिति । शान्तः षकारः, तस्यान्तः सकारः । कादिसंयुक्तम् । कादिः विसर्गः । ऐकारान्तान्तयोजितम् औकारयोजितम् । एपेति । अस्यार्थः—एवंप्रकारा वाग्भवकामराजशक्त्यात्मिका विद्या करशुद्धिकरीति ॥ ९९-१०० ॥

एओमध्यगतमिति चतुर्भिर्म[11]हारहस्यभूतषडङ्गन्यासविनियुक्तसमस्तत्रिकभेदकन्दरूपमूलबा[12]लाविद्योद्धारः क्रियते । वा[13]ग्विधानाय वाक्प्रसरणाय (वाग्)व्यक्त्यर्थम्, (निर्दिष्टं) स्वाध्यासेन सोऽहमित्यभिस[14]न्धानेन वा । केव[15]लं ध्यानयोगाद्यनपेक्षमित्यर्थः । तुर्विशेषे । [1]अर्धेन्दुबिन्द्वङ्कितमित्य[16]र्थः ।

मौकारः सविसर्गसकारौकारान्वितं कुर्यात् । यथा ऐं आं सौः । एपेत्यादि । एषा उद्धृता श्रीमहात्रिपुरसुन्दर्या अ[17]ङ्गविद्यानामष्टविधानां प्रथमा । अस्यास्तु करशुद्धिकर्मणि विनियोग इत्यर्थः ॥ ९९–१०० ॥

एओमध्यगतमित्यादि । एओमध्यगतमैकारं यद्बीजं तदिहाङ्गन्यासविधाय । आद्यं बीजम् । तदपि वाग्भवं वाग्विधानाय केवलं रुद्रयामलतन्त्रेषु निर्दिष्टं परमाक्षरमिति

१. एतत्–सत्त. । २. तन्त्रेषु–अ. सक. स. ग. घ. । ३. रपरत्वम्–क. ख. । ४. विश्व–ग. । ५. शितः–क. ख. ग. । ६. नन्तरस्य–क. । ७. द्वितीयः कामानन्दः–ख. ग. । ८. संज्ञा–क. । ९. मदन–ख., महारूपा–ग. घ. । १०. अपि–घ. । ११. रान्मरआभूतं–ख., महाक्षरभूत–ग. घ. । १२. 'बाला' नास्ति–ख. । १३. 'वाग्वि···सन्धानेन वा' नास्ति–ख. । १४. सन्धानेन–ग. घ. । १५. केवल–ख. । १६. मिति–ग. घ. । १७. मष्टविधानामङ्गानां–क. ख. ग. ।

1. एओमध्यगतम् ऐकाराक्षरम्, तत् अर्धेन्दुबिन्द्वङ्कितम् ऐं बीजं भवतीति यावत् ।

मादनं शक्रसंयुक्तं चतुर्थस्वरसंयुतम् ॥ १०१ ॥
ऊर्ध्वमर्धेन्दुबिन्द्वाढ्यमाद्यन्तेऽतः[2] परं पुनः[3] ।
शान्तान्तं कादिसंयुक्तमैकारान्तान्तयोजितम् ॥ १०२ ॥
एषा विद्या महाविद्या योगिनीनां महोदया ।

---

परमाक्षरम् । विश्वाभेदमयत्वात् पारम्यम् । अक्षर [1]प्राग्वत् । यच्छ्रुतिः— "वागक्षरं प्रथमजा ऋतस्य" ( तै० ब्रा० २।८।८।५ ) इति । मादन-मिति । मदन. कामस्तद्बीज मादनम् । इह तदेकदेशभूत ककारमात्र गृह्यते मादनमिति । शक्तसंयुक्तम् । शक्रो लकार. । चतुर्थस्वर ईकार. । ऊर्ध्व शिर. । आद्यन्ते आद्यस्य वाग्भवस्यान्ते । योजितमिति शेप । अतः पर पुनरिति ।

---

यायत् । मादन शक्रसयुक्तमिति । मादन ककार. । शक्रसंयुक्तं लकारसंयुक्तम् । चतुर्थस्वर ईकार: । ऊर्ध्वमर्धेन्दुबिन्द्वाढ्यमिति अर्धचन्द्रबिन्दुयुक्तम् । इत्युद्धृतबीजमिदमङ्गन्यास-विद्याया द्वितीय बीजम् । एतदपि कामबीजं प्रसिद्धम् । आद्यन्तेऽन पर पुनरिति । आदेर्वाग्भवबीजस्यान्तेऽनन्तरमुद्धृतकामराजबीजं योज्यम् । अन इत्यस्यायमर्थ— अस्मात् कामराजादनन्तरं पुन परं योज्यम् । परमिति सविसर्गसौकारम् । करशुद्धि-विद्यायास्तार्तीय बीजमङ्गन्यासविद्याया अपि तार्तीयत्वेन योज्य नान्यदिति सूचयितु पुनः शान्तान्तमित्यादि पठति । कोऽर्थः ? करशुद्ध्यङ्गन्यासविद्ययोस्तार्तीयं बीजमेक-मेवेति[10] । एषा विद्येत्यादि । एषा विद्या अङ्गन्यासविद्या [11]महाविद्या महती चेयं विद्या चेति महाविद्या । महती महत्त्वसपादिनी । विद्या[12] ज्ञानप्रदा । केषाम् ?

१. अर्धेन्दुयुक्त—सक । २. ढ्य कामराज समुद्धृतम्—वाग. मे., कामराज भवेत् प्रिये—सग. । ३. तत्पर पुन —ग्रक. ल., स्वपर पुन.—ज. । ४. सयुतम्—सग. । ५. योज्य—ग. घ । ६. इत्युक्तबेन्द्वाढ्यमिति—घ. । ७ बिन्दुचन्द्रामयुक्तमिति—क ग. घ. ङ. । ८. 'इत्युद्धृत पर पुन इत्यस्य स्थाने 'एतदङ्गविद्यायाद्वितीय कामराजम् । आद्यन्तेऽत्र पर पुन' इति पाठ— ख. ङ. ज. । ९. 'बीज 'स्तार्तीय' नास्ति—ख. ङ. । १०. मेवेत्यभिप्राय —घ., मेवेत्यर्थ —ख. ङ. ज. । ११. 'महाविद्या' नास्ति—क. ग. ङ. । १२ 'विद्या' नास्ति—क ग. ङ. ।

1. प्राग्वदिति । "अक्षरे न क्षरत्यध्वनुते वेति निष्पन्न" (पृ. १४, प. १०) इत्येव व्याख्यातम् ।

**कुलविद्या महेशानि सर्व[1]कार्यार्थ[1]साधिका ॥ १०३ ॥**
**अनया विद्यया [2]गौरि रक्षामात्मनि कारयेत् ।**
**एतस्या एव विद्यायाः शिवमायाग्निबिन्दु[3]मत् ॥ १०४ ॥**
**बीज[4]मादिपदे यु[5]क्त्वा [6]कार्यात्मासनरूपिणी ।**

---

कामराजबीजोद्धारात् पश्चादित्यर्थः । शान्तान्तमिति । अस्य बीजस्य पुनरुद्धारो मूलविद्योद्धारे पूर्णोद्धारः कर्तव्य इति द्योतयितुं [7]महाविद्यादरविधानार्थं[8] च । महाविद्या । पूर्णाहन्ताप्रदत्वाद् महत्त्वम्, स्वरूपप्रकाशहेतुत्वाद् विद्यात्वम् । योगिनीनां नित्यसमावेशयुक्तानाम् । महोदया, भोगमोक्षलक्ष्म्यात्मकतृप्तिप्रदत्वात् । [9]कुलविद्या कुलाङ्गनावद[10]तिकौतुकेन योग्येन[11] स्वीकर्तव्येत्यर्थः । हे[12] गौरि ! प्रकाशात्म[13]तया स्वच्छभावे ! रक्षामात्मनि कारयेदिति । अयमर्थः—अनया [14]मूलविद्यया आत्मशब्दाभिधेये देहे रक्षार्थं षडङ्गमाचरेदिति ॥ १००-१०४ ॥

---

योगिनीनाम् । महोदयेति । उदयशब्देन सम्पत्करी । [15]कुलविद्येति । योगिनीनामियं विद्या कुलधनमूलभाण्डारम् । कोऽर्थः ? सुगोप्येति यावत् । सर्वकार्यार्थसाधिकेति । कर्तव्यत्वेनाभिमतानां चतुर्णामपि पुरुषार्थानां [16]साधिकेयं विद्या स्वातन्त्र्येण । ऐं [17]क्लीं सौः इति । इह [18]षडङ्गन्यासकर्मणि विनियोगः[19] । अनया विद्यया देवि[20] रक्षामात्मनि कारयेदिति । अनयो[21]द्धृतया विद्यया हे देवि[22] ! आत्मरक्षां कारयेदि[23]त्यर्थः । आत्मनीत्यनेन[24] तृतीयबीजे शिवान्वितत्वं सूचितम् ॥ १००–१०४ ॥

---

१. धिनी—वाग. से., धका—ब., धकी—राक. ख. । २. देवि—अ. । ३. मुक्—सक. । ४. बिन्दु—सघ. । ५. युक्तम्—वाग. से. अ., युक्ता—ब. सघ. । ६. तदा—वाग. से. सख. घ, देव्या—सक. । ७. 'महा' नास्ति—क. ख. । ८. 'महाविद्या…प्रदत्वात्' नास्ति—क. ख. । ९. मूल—क. । १०. दिति—क. ख. । ११. योगेन—क., योऽन्येन—ग. घ. । १२. 'हे गौरि…भावे' नास्ति—ख. । १३. स्मरत्वभावे—क. । १४. मूलकुलवि—ख. ग. घ. । १५. कुलविद्येयम् । महेशानीति । इयं विद्या कुलधन योगिना मूलभण्डारम्—ख. ड. ज. । १६. साधकीयं—ख. ड. ज. । १७. 'ऐं क्लीं सौः इति' नास्ति—क. ग. घ. छ. । १८. स्वस्याङ्ग—ख. घ. ड । १९. योग इति भावः—क. ग. घ. छ. । २०. गौरि—घ. । २१. या तूद्—क. ग. छ. । २२. गौरि—ख. घ. ड. ज. । २३. येत् सम्प्रदायेनेत्यर्थः—ख. घ. ड. ज. । २४. नेनैव—ख. घ. ड. ज. ।

**पुनर्विद्यादिमस्योर्ध्वमन्तमन्तं शिवान्वितम् ॥ १०५ ॥**
**त्रैलोक्यमोहनोर्थं सा विद्या चक्रासनेस्थिता ।**

एतस्या एवेत्यादिपञ्चभिरासनचतुष्टयमाह । एतस्या मूलविद्याया । आदिपदे आदिस्थाने । शिवो हकार. । माया ईकार. । अग्नी रेफ । अयमर्थ —अस्या विद्याया वाग्भवस्थाने भुवनेश्वरीवीजं युक्त्वा [1]स्थिता यदा, तदेयमात्मासनरूपिणी विद्येति । आत्मन स्वस्य साधकस्य ॥१०४-१०५॥

[2]पुनर्विद्यादिमस्योर्ध्वमन्तमन्तं शिवान्वितमिति । विद्यादिमस्य मूलविद्याया आदिभूतस्य वाग्भवस्य । ऊर्ध्वम् उपरि । अन्तं सकार. । कथ

---

एतस्या एव विद्याया शिवमायाग्निबिन्दुमद बीजमादिपदे युक्तमिति । एतस्या आत्मरक्षाविद्याया । आदिपदे आदिस्थाने स्थितं वाग्भवमुद्धास्य बीजान्तर प्रक्षिपेत् । शिवो हकारः । माया ईकार । अग्नो रेफ । बिन्दुरनुस्वारः । एतेषा चतुर्णां समुदायरूपं बीजं यदा प्रक्षिप्त भवति तदा आत्मासनरूपिणी भवतीयं विद्येत्यर्थः । ह्रीं क्लीं सौ. इति ॥ १०४-१०५ ॥

पुनर्विद्याद्यमित्यादि । पुनरपि विद्याद्यम् आत्मरक्षाविद्याया आदिस्थाने स्थित वाग्भवमेव चतुष्कलमुद्धास्य प्रक्षिपेदित्यर्थ. । अस्योर्ध्वेऽनन्तर तु शिवान्वितमिति । अस्योर्ध्वं अस्य बीजत्रयस्योर्ध्वे । अनन्तरम् आदिमध्यान्तरम् । प्रत्येकं बीजानामासन

— —

१. दिमासार्यं-व., द्यम-अ. याक. स. ग. । २ र्ध्वेऽनन्तर तु-अ., मन्तर तु-वाग. से. मन्तरन्त-याव. स., मन्तरन्त -सख. ग , मन्त्यमन्त्र-व मन्त्रमन्त -सघ । ३. हिनी या-व, हिनीय-सग. । ४. सने-घ. सच. । ५. फुल-ग. । ६. 'आदि' नास्ति-क. । ७. जयुक्ता-च. स. । ८. 'आत्मन कस्य' नास्ति-स. । ९. 'प्र' नास्ति-क ग. छ. । १०. 'ह्रीं क्लीं सोः इति' नास्ति-क. ग. घ. छ. । ११. 'पुनरपि विद्याद्यम्' नास्ति-क. ग. घ. छ. । १२. 'अस्योर्ध्वं' नास्ति-क. ग. छ. । १३. न्तम्-स. ङ. ज. ।

1 स्थिता यदेति । यदा इय विद्या स्थितेत्यर्थ ।

2. "केचित्तु विद्याया बालाया आद्य बीजमस्योर्ध्वं द्वितीय बीजम् । अन्ये तु पुनर्विद्यादिमस्योर्ध्वमन्तमन्तं शिवान्वितमिति पठित्वा विद्यादिमस्य मूलविद्याया आदिभूतस्य वाग्भवस्योर्ध्वमन्तं सकार कुर्यात् । हंसमन्त्रे सकारस्यान्त्यत्वाभिप्रायेणेह तथा निर्देश । अन्तं तृतीय बीज तु शिवान्वित कुर्यादिति व्याचख्यु " (से पृ. ६०) ।

**पुनराद्यां महाविद्यां शिवचन्द्रसमन्विताम् ॥ १०६ ॥**
**कृत्वा कामप्रदां विद्यां[2] सर्वमन्त्रासनस्थिताम्[3] ।**

सकारस्यान्तत्वमिति चेत् ? उच्यते—अत्र वक्तुः शिवशक्तिबीजे बुद्धिस्थे । इह सर्वत्र विद्यासु हंसात्मनोः शिवशक्तिबीजयोः सन्निहितत्वात्तयोरादिबीजं हकारः, अन्तबीजं सकारः । अत्रान्तबीजं सकारमादौ[4] विनियुङ्क्ते, आदिबीजं हकारमन्ते विनियुङ्क्ते[5] इति । आदिबीजस्योपरि अन्तं सकारं कुर्यादिति शेषः । अन्तं तृतीयबीजम् । शिवान्वितं हकारान्वितम् । चक्रासनस्थिता[6] चक्रस्यासनतया स्थिता ॥ १०५-१०६ ॥

पुनराद्यामिति । [1]आद्यां कुलविद्याम् । महाविद्यां[7] सर्वविद्याकन्दभूमिम्[8] । शिवचन्द्रसमन्विताम् । शिवचन्द्रौ हकारसकारौ । सर्वमन्त्रासनस्थिता । सर्वेषां मन्त्राणामासनतया स्थिता । शिवचन्द्रसमन्विताामित्य-

---

स्थाने शिवान्वितं शिवो हकारस्तेनान्वितं[9] संबद्धं कुर्यादित्यर्थः ।[10] ह्रैं ह्क्लीं ह्सौः । त्रैलोक्यमोहनीयं[11] सा विद्या चक्रासनस्थितेति । अस्या विद्याया नाम त्रैलोक्यमोहनीति न केवलं नामतः, अर्थतोऽपि त्रैलोक्यमोहनीति[12] त्रैलोक्यं मोहयतीति, योगिन्याश्रुतेत्यर्थः । अस्या[13] विद्यायाश्चक्रासनेऽत्र[14] विनियोगः ॥ १०५-१०६ ॥

पुनराद्यां महाविद्यां शिवचन्द्रसमन्वितां कृत्वेति । पुनरप्याद्यां विद्याम् । आत्मरक्षाविद्यामित्यर्थः[15] । शिवो हकारः । चन्द्रः सकारः । प्रतिबीजमादिस्थाने तदुभया-

---

१. हीं—सक. ग. घ. । २. नित्यां—सग., विद्यां—सक. घ. । ३. ताम्—सक.ग. घ. । ४. मकारादौ—ग. घ. । ५. सर्मिति । आदि—क. ख. । ६. 'चक्रा''''''राद्यामिति' नास्ति—ख. । ७. 'महाविद्यां' नास्ति—क. घ. । ८. मूलाम्—ख., भूमिमिति—ग. । ९. 'अन्वितं' नास्ति—क. ग. छ. । १०. 'ह्रैं ह्क्लीं ह्सौः' नास्ति—क. ग. घ. छ. । ११. ह्रि—ख. घ. ङ. । १२. यतं मोहयतीति त्रैलोक्यमोहनं—ख. ङ. ज. । १३. 'अस्या विद्यायाः' नास्ति—ख. ङ. ज. । १४. अत्र विनियोगोऽपि चक्रासने—क. ग. घ. छ. । १५. मिति—ख. ङ. ज. ।

1. "मन्त्रासनयोस्तत्रावपरेण बालैव ग्रन्थं परामृश्यत इति चिन्त्यम्" (से. पृ. ६१) ।

देव्यात्मासनविद्यायाः पूर्वोक्ताया यथाक्रमम् ॥ १०७ ॥
अन्तदेशे[1] तोयबिन्दुशक्रशक्तीरनुक्रमात् ।
संयोज्य परमेशानि साकमर्धेन्दुना[2] ततः[3] ॥ १०८ ॥
केवलाक्षरभेदेन[4] साध्यसिद्धासनस्थिता[5] ।

विशेषोक्तेऽपि तृतीयबीजस्य पूर्वमेव[6] तत्सम्बन्धस्य[7] विद्यमानत्वात् शिवचन्द्र-समन्वितत्वं पूर्वबीजयोरेवेति तात्पर्यम् ॥ १०६-१०७ ॥

देव्यात्मासनेति । देव्यात्मासनविद्याया[8] देवीरूपतामापन्नस्य साधक-कस्यासनतया स्थितायाः । अन्तर्देशे[11] तृतीयबीजस्य स्थाने । तोयबिन्दुशक्र-शक्तीरनुक्रमात् । तोयं वकारः । शक्रो लकारः । [1]शक्तिरेकारः, योन्याकार-त्वात् । केवलाक्षरभेदेन तृतीयस्थानप्राप्ताक्षरमात्रेण[12] । साध्यसिद्धासनस्थिता[13]

न्वितं कुर्यादितीयं[14] विद्या कामप्रदा भवति । न[15] केवलमैश्वर्यार्थं, अत्रास्या विद्यायाः सर्वमन्त्रासने[16] विनियोगः । [17]ह्सैं ह्सक्लीं ह्सौः इति ॥ १०६-१०७ ॥

देव्यात्मासनविद्यायाः पूर्वोक्ताया यथाक्रममिति । पूर्वोक्ताया देव्या आत्मासन-विद्याया बीजद्वयं यथाक्रमेण स्थितं भवतु[18] । अन्तदेशे तार्तीयबीजस्थाने पूर्वस्थितबीजं विसृज्य बीजान्तरं प्रक्षेपणीयम् । तोयबिन्दुशक्रशक्तीरनुक्रमादिति । तोयो वकारः । बिन्दुरनुस्वारः । शक्रो लकारः । शक्तिरेकारः । एतान् यथाक्रमं[19] संयोज्य गुरूपदेशपूर्व-कम् । साकमर्धेन्दुनादत इति । अर्धेन्दुनादेन[20] कलानादाभ्यामुपेतं कुर्यात् । केवलाक्षर-

१. अन्तर्देशे–सक. ख. । २. सार्धं–सख. ग. । ३. नादतः–अ. से. सक., संपुतम्–सख. । ४. योगेन–ख. । ५. विद्या साध्यासनस्थिता–खाक. ख., विद्या सिद्धा–अ. । ६. मेवं–ग. घ. । ७. स्यापि–क. ख. । ८. 'देव्यात्मा···स्थितायाः' नास्ति–ख. । ९. पमा–श. ख. । १०. 'साधकस्य' नास्ति–क. ख. । ११. देशे–क. ख. ग. । १२. भेदेन–ख. । १३. 'साध्य···सिद्धा इति' नास्ति–ख. । १४. यमपि–घ. । १५. केवलमैश्वर्यप्रदा भवतीति सर्व–ख. ड. ज., केवलमैश्वर्यार्थेऽस्या अपि विद्यायाः सर्व–घ. । १६. सनस्थाने–क. ग. घ. ङ. । १७. 'ह्सैं ह्सक्लीं ह्सौः इति' नास्ति–क. ग. घ. छ. । १८. भवति–क. ख. ग. छ., भवेत्–ज. । १९. क्रमेण–क. ग. छ. । २०. नादकला–घ. ।

1. शक्तिश्चतुर्थस्वरः, तथा च ह्रीं क्लीं ब्लीं इत्युद्धारो वामकेश्वरीमतविवरणे ।

हंसबीजसमारूढामाद्यामग्न्यासनस्थिताम् ॥ १०९ ॥
सर्वार्थसाधिका विद्या देव्यावाहनकर्मणि ।

तत्तन्मन्त्रप्रतिपाद्यानां साध्यानां सिद्धानां च देवतानामासनतया स्थिता । देवतानां तु द्वयी स्थितिः—कर्मसिद्धा आजानसिद्धा इति ॥ १०७-१०९ ॥

देव्यावाहनविद्यामाह—हंसेति । आद्यां मूलविद्याम् । हंसबीजसमारूढाम् । [1]हंसशब्देनानच्को हकारसकारौ लक्ष्येते । अग्न्यासनस्थितां रेफासनस्थिताम्, कुर्यादिति शेष. । सर्वार्थसाधिका पुरुषार्थचतुष्टयकरी । इयं विद्या देवीसन्निधिकरीत्यभिप्रायः । एतद्विद्योद्धारेऽभियुक्तोक्तिः—

---

भेदेन विद्या सिद्धासनस्थितेति । केवलमन्तर्देशस्थबीजव्यत्यासमात्रेण पूर्वोक्तात्मासनविद्यैव साध्यसिद्धासनस्थिता भवतीत्यर्थः । ह्रीं क्लीं व्लैं ॥ १०७-१०९ ॥

हंसबीजसमारूढामाद्यामग्न्यासनस्थितामिति । हंसबीजे हकारसकारौ । तदारूढामाद्यां विद्याम् आत्मरक्षाविद्याम् । अग्न्यासनस्थितां रेफसहितां कुर्यादिति यावत् । सर्वार्थसाधको विद्या देव्यावाहनकर्मणीति । इयमुद्धृता विद्या धर्मार्थकाममोक्षाणां चतुष्टयानां साधको पञ्चकूटात्मिका । अस्या विनियोगो देव्यावाहनकर्मणीत्यर्थः । ह्सैं ह्स्क्ल्रीं ह्स्रौः ॥ १०९-११० ॥

---

१. सोम—याक. ख. । २. रूढां मायामात्मा—च., रूपां—सध. । ३. स्थिता—सख. ग. । ४. साधको—याक. ख. ड., साधिकौ—च. सघ., साधिका—सख. । ५. विद्यां—च. सख. घ. । ६. 'साध्यानां' नास्ति—क. ख. । ७. 'तु' नास्ति—क. ख. । ८. पूजासन—च. ख. । ९. 'आद्यां मूलविद्यां' नास्ति—क. ख. । १०. साधनी—क. ख. । ११. 'एतद्विद्योद्धारे' नास्ति—क. । १२. विन्यास—क. ख. ग. ङ. छ. ज. । १३. 'ह्रीं क्लीं व्लैं' नास्ति—ग. घ. छ. ज. । १४. बीजौ—क. ख. ग. छ. । १५. 'इयमुद्धृता···कर्मणीत्यर्थः' इत्यस्य स्थाने 'एषा धर्मादिसाधको पञ्चकूटात्मिका विद्या । अत्रावाहनकर्मणि विनियोगः' इति पाठः—ख. ङ. ज. । १६. 'ह्सैं ह्स्क्ल्रीं ह्स्रौः' नास्ति—क. ग. घ. छ. ज. ।

1. "प्राञ्चस्तु—हंसमन्त्रघटकं व्यञ्जनद्वयमित्येव हंसपदार्थः । तेन हकारसकारौ द्वावपि मिलित्वा इत्याहुः । ये तु हंसेति स्वरूपमेव न बीजनामेति व्याचक्षते···। अस्मदगुरवस्तु ईदृशं कर्म पूर्वापरं गन्धमानारुषं सम्प्रदायमेव शरणीकुर्वन्ति" (से. पृ. ६१) ।

एवमेता[1] महाविद्या देवि[2] सर्वार्थसिद्धिदा[3]: ॥ ११० ॥
महात्रिपुरसुन्दर्या मूलविद्यां शृणु प्रिये ।

[1]व्योमेन्दुवह्न्यधरविन्दुभिरेकमन्य[4]द्रक्ताच्छकेन्द्रशिखिभि.सरमार्घ[5]चन्द्रैः ।
अन्यद् द्युधीतकरपावकमन्वमन्तै[6]र्बीजैरमीभिरुदिता त्रिपुरेति विद्या ॥ इति ।
( प्र० सा० ९ ।२ )

करशुद्ध्याद्यावाहनान्ता उद्धृता[8] विद्या. स्तौति—एवमिति । ऋजु-
विमर्शिन्यां विद्या न लिख्यन्ते, सुभगोदये लिखितत्वात्[9] । ऋजुविमर्शिन्यां
तु ग्रन्थविवरणं क्रियते[10] । इदमप्युक्तमस्माभिः—

एवमेता महाविद्या देवि सर्वार्थसिद्धिदा इति । एवमुद्धृता विद्या[11]. करशुद्ध्या-
द्यावाहनान्तेषु[12] कर्मसु विनियुक्ताः सर्वार्थसिद्धिदा सकलपुरुषार्थसाधिका[13] इत्यर्थः[14] । तत्र
प्रथमोद्धृता करशुद्धिकरी विद्या प्राधान्येन विद्यैश्वर्यप्रदा । ततो[15] उद्धृता अङ्गन्यासविद्या
आत्मरक्षाकर्मणि विनियुक्ता द्वितीया[16] । तृतीयविद्या च साधयति यत्किञ्चित्तल्लोके
नास्ति, तथा देव्यात्मासनकर्मणि ( विनियुक्ता ) । चतुर्थी विद्या समस्तसम्पदमाकर्ष-
यति, तथा चक्रासनकर्मणि विनियुक्ता । पञ्चमी विद्या[17] त्रैलोक्यं मोहयति,[18] तथा
सर्वमन्त्रासनकर्मणि स्थिता । षष्ठी विद्या[19] प्राधान्येन[20] समग्रैश्वर्यप्रदा, तथा साध्य-

१. मेषा—सग. । २. देव्या—सक. । ३. दा—सग. । ४. च्छात्ताच्छिवेन्द्र—क. ख. । ५. मार्यं—दी. । ६. मन्त्यमन्त्यं—दी., मन्यमन्तै—ब.ख. । ७. द्युपावा—क. ख. । ८. 'उद्धृता'' शिन्यां तु' नास्ति—घ. । ९. दयोत्तत्वात—क. ख. । १०. 'क्रियते' नास्ति—क. ख. । ११. 'विद्या' नास्ति—ख. ङ. ज. । १२. नान्तकर्मणि—क. ग घ. छ. । १३. सिद्धिदा—ख. ङ. ज. । १४. 'इत्यर्थ' नास्ति—ख. ङ. ज. । १५. तदनन्तरोद्धृता विद्या—क. ग. घ छ. । १६. 'द्वितीया'' देव्यासनकर्मणि' नास्ति—क. ग. छ. । १७. 'विद्या' नास्ति—ख. ङ. ज. । १८. तीत्यर्थं—क. ग. घ. छ । १९. 'विद्या' नास्ति—ख. ङ. ज. । २०. न्येनैव—क. ग. छ. ।

1. व्योमेति । व्योम हकारः । इन्दु शुक्ल सकार । वह्नी रेफः । अधर ऐकारः । बिन्दुरनु-
स्वार । एतै सम्पिण्डितैराद्यबीजम् । रक्त हकार । अच्छ सकारः । क इति स्वरूपम् ।
इन्द्रो लकार । शिखी रेफ । रमा ईकार (?) (रमा ईकार—इति तु विवरण-
दीपिका, पृ. ५७१) । अर्धचन्द्रो बिन्दु । एतै सम्पिण्डितैर्द्वितीयं बीजम् । द्युईकारः ।

**मादनं तदधः शक्तिस्तदधो बिन्दुमालिनी ॥ १११ ॥**
**ऐन्द्रमाकाशबीजस्थमधस्ताज्ज्वलनाक्षरम् ।**

---

पूर्वं विद्यां गुरोर्लब्ध्वा मूलमृजुविमर्शिनीम् ।
महासारं सुकृतिनः पश्यन्तु सुभगोदयम् ॥ इति ॥ ११० ॥

मादनमित्यादिसप्तकेन मूलविद्योद्धारः क्रियते । एतद्विषयेऽभियुक्तवचनम्—

अनेककोटिभेदैस्तु[1] गदितं त्रैपुरं महः ।
तन्मध्ये[3] तु परा[2] दीप्ता महात्रिपुरसुन्दरी ॥ इति,

---

सिद्धासनकर्मणि विनियुक्ता । सप्तमी[5] विद्या किं किं न साधयेत्, सर्वमपि साधयेदित्यर्थः, तथा देव्यावाहनकर्मणि स्थिता पञ्चकूटसं( ज्ञाष्टमी ? ज्ञा सप्तमी ) महाविद्या[6] सर्वार्थसाधकीत्यर्थः । एवं स्वातन्त्र्येण सर्वार्थसाधक्यो विद्या यस्या मूलविद्याया अङ्गभूतास्तस्याः सकलपुरुषार्थसाधनसामर्थ्यमस्तीति[7] किमु वक्तव्यम् । तदुक्तं संकेतपद्धत्याम्—

आसामष्टविधानां तु विद्यानां[8] पृथग् नामग्रहणं कृतम्[9] । तथा—

त्रिपुरा त्रिपुरेशी च सुन्दरी पुरवासिनी ।
श्रीमालिनी च सिद्धाम्बा त्वष्टमी त्रिपुराम्बिका ॥
त्रिपुरा प्रथमा नित्या द्वितीया त्रिपुरेश्वरी ।
सुन्दरीति[10] तृतीया स्याच्चतुर्थी पुरवासिनी ॥
पञ्चमी त्रिपुराश्रीः स्यात् षष्ठी त्रिपुरमालिनी ।
सप्तमी[11] त्रिपुरासिद्धा त्वष्टमी त्रिपुराम्बिका ॥ इति ॥ ११० ॥

---

१. स्तदन्तर्वि–अ. ब. सक. ख. ग. घ. । २. भोगि–घ. । ३. तत्र मध्ये–घ. चि. । ४. महा–ख. । ५. सप्तमस्थाने स्थिता–ख. घ. ङ. ज. । ६. 'महाविद्या' नास्ति–छ. । ७. सकलार्थप्रदान–ख. ङ. ज. । ८. 'विधानां तु' नास्ति–ग. । ९. 'कृतम् । तथा' इत्यस्य स्थाने 'यथा' इत्येव पाठः–ख. ङ. ज. । १०. सुन्दरी च–क. ग. छ. । ११. एषा पङ्क्तिर्नास्ति–ख. ङ. ज. ।

शीतकरः सकारः । पावको रेफः । मनुरीकारः । अमन्त इति अं अनुस्वारः । अन्तो विसर्गः । बिन्दुविसर्गयुक्तमित्यर्थः । (अमन्तो विसर्जनीयः—इति तु विवरणदीपिका, पृ. ५७१) । एभिः सम्पिण्डितैस्तृतीयबीजम् । एभिस्त्रिभिर्बीजैः संयुक्ता त्रिपुरा नाम विद्या (प्र. सं. ५७–५८ पत्रयोः) ।

प्रोत्कीलनं विधायास्या देवदेवेन दर्शितम्[1]।
चतुर्विंशतिसाहस्रे[2] रससारकसञ्ज्ञ[3](क.?के) ॥ इति च[4]।

अत्र लोपामुद्राप्रस्थानमाश्रित्य[5] निष्कीलविद्यानुसारेण सत्सम्प्रदायान्वयेन[6] व्याख्या लिख्यते। अस्याः सत्सम्प्रदायान्वितत्व[7] नाम ओड्याणकाम-[8]रूपजालन्धरपूर्णगिरिपीठचतुष्टयाश्रय[9]श्रीमहात्रिपुरसुन्दरीकामेश्वरीवज्रेश्वरी-भगमालिनीदेवीस्वरूपविमर्शक[10]चर्यानाथो[11]ड्डीशनाथषष्ठी[12]शनाथमित्रीशनाथलोपा-मुद्रागस्त्यकङ्का[13]लतापसधर्माचार्यमुक्तकेशी[14]श्रीमद्दीपकनाथदिव्यसिद्ध[15]क्रमान्वित-त्वात्, दीपका[16]चार्योरसपुत्रसङ्केतपुञ्जप्रकाशकजिष्णुदेवप्रभृतिमहायोगिवर्यमान-वौघपरिगृहीतत्वाच्च। इयं[17] मध्यमबीजप्रधाना विद्या, बीजत्रयेऽपि कामराज-बीजसंयोगात्। मादनं [1]मदयति हर्षयतीति मादन प्राण. शिवरूप। सति

---

[18]अथेदानीं मूलविद्यामुद्धर्तुमुपक्रमते—महात्रिपुरसुन्दर्या मूलविद्यां शृणु प्रिये! इति। मादन तदध शक्तिस्[19]तदन्तर्बिन्दुमालिनीति। मादन क्रोधीश.। तस्याधोदेशे शक्ति-झिण्टीश। तदधस्तस्याधोदेशे बिन्दुमालिनी त्रिमूर्तीश। ऐन्द्रमाकाशबीजस्थमिति। ऐन्द्र पिनाकीश'। आकाशबीजस्थमिति [20]लकुलीश। लकारं हकारोपरि स्थित यथा भवति तथा कुर्यादित्यर्थ.। अधस्ताज्ज्वलनाक्षरमिति। आकाशबीजस्याध.स्थाने

---

१. ता—ग. घ.। २. साहस्रे—क. ख. घ.। ३. ससाररससञ्जित—क., रसारकससञ्जितम्—ख.। ४ 'च' नास्ति—क. ख.। ५ प्रसार—क.। ६. दायत्वेन येन—ग.। ७. 'सत्' नास्ति—क., सत्सम्प्रदायस्य कथमिति—ख., सत्सम्प्रदायस्य कथम्—ग. घ.। ८. उड्याण—क। ९. 'आश्रय' नास्ति—क., आश्रया—ख.। १०. र्शन—क.। ११. योड्डना—ग. घ.। १२. षष्ठना—ग. घ.। १३. कालतापस—क.। १४. शीश्वरश्रीदीपकला—क.। १५. सैद्ध—ग. घ.। १६. दीपकला—क.। १७ इय च—क.। १८. 'अथेदानीं वाग्भवसप्तक भवतीति' इत्यस्य स्थाने 'मादन क्रोधीश, शक्ति मुण्डीश, बिन्दुमालिनी त्रिमूर्तीश, ऐन्द्रं पिनाकीश, आकाशबीजस्थमिति लकुलीश, अधस्ताज्ज्वलनाक्षरमिति भुजङ्गेश, मायाबीजे त्रिमूर्तीश, बिन्दुरनुस्वार, ईश्वरो नाद। एतद्वाग्भवसप्तम्' इति पाठ—च. झ. ञ.। १९ 'स्तदधो बिन्दु' इति शु टीकानुगुण पाठ। २०. लकुलीश' नास्ति—ख. ग. छ.।

1 "ऋतुविमर्शिन्यामपि—(मा?म)दयति हर्षयतीति मादन प्राणो हकार। प्राणस्यैव पुरस्य तदेऽपाने प्राणो वायुमोऽपानो भवत इति श्रुतेश्च। तस्य हकारस्याध शक्ति पूर्वोक्तार्थं बीज सकार। बिन्दुमालिनीनाम्नेन रकार एव गृह्यते सम्प्रदायादिति व्याख्यानम्" (सौ. पृ. १५)।

**मायाबिन्द्वीश्वरयुता[1] सर्वोपरि नियोजिता[2] ॥ ११२ ॥**
**अयं स वाग्भवो देवि वागीशत्वप्रवर्तकः ।**

---

हि[3] प्राणे हर्षे[4] सर्वे प्रहृष्यन्ति[5] नासति[6]। प्राणस्य[7] वृत्यन्तरात्मन्यपाने मदशब्दः श्रुतौ दृष्टः—"प्राणो वै गृत्सोऽपानो मदः" ( ऐ० आ० २।२।१ ) इति। तत्संबद्धं[8] बीजं मादनम्। स च महाप्राणरूपो हकारः, शिवबीजमित्यर्थः। अथवा माद्यतीति[9] शक्त्युपभोक्तृ शिवस्य मादनं[10] इति नाम। ननु[11] शास्त्रेऽत्र[12] सर्वत्र मादनशब्दः ककारवाचकः, इह कथमन्यथेति। उच्यते। सत्यम्। किन्त्विहत्यो मादनशब्दो हकारमेव गृह्णाति। कथम्? विद्याया निष्कीलत्वात् सत्सम्प्रदायान्वितत्वादतिरहस्यत्वाच्च, आगमान्तरे तथा व्याख्यातत्वाच्च। सत्सम्प्रदायविहीना पुनरत्रापि[13] स्वोत्प्रेक्षया तथा मन्यन्त इत्यस्मदुक्तमेव समञ्जसम्। तदधः तस्य हकारस्याधः। शक्तिः अमृतबीजम्, सकार इत्यर्थः। मादनशक्तिशब्दा[14]भ्यामो[15]घात्राधाररूपं शिवशक्त्यात्मकं हंसबीजमुद्धृतमिति यावत्। तदधः तस्य सकारस्याधःप्रदेशे। बिन्दुमालिनी [16]तुण्डबीजम्, ककार इत्यर्थः। तदुक्तं रस[17]सारसंग्रहे—

---

ज्वलनाक्षरं भुजङ्गीशः। माया[18] त्रिमूर्तीशः। बिन्दुरनुस्वारः। ईश्वर इति नादः। पूर्वोद्धृतबीजवरस्य शिरःस्थाने बिन्दुनादान्वितं यथा भवति तथा नियोजितं बीजं वाग्भवसंज्ञकं भवतीति। अयं स वाग्भवो देवि वागीशत्वप्रवर्तक इति। अयं[19] स वाग्भव इति प्रसिद्धो वागीशत्वं प्रवर्तयतीति[20] भावः॥ १११-११२॥

---

१. युतं–वाग. से. सक. ग.। २. जितम्–वाग. अ. से. सक. ग., जयेत्–सख.। ३. 'हि' नास्ति–क. ख. घ.। ४. 'हर्षे' नास्ति–क. ख. घ.। ५. 'प्र' नास्ति–क. ख. घ.। ६. 'नासति' नास्ति–क. ग.। ७. प्राणवृ–क.। ८. बन्धि–क. ख.। ९. मायतीति–ग. घ.। १०. र्माभति–क. ख. ग.। ११. 'ननु' नास्ति–क., 'ननु···समञ्जसम्' नास्ति–ख.। १२. 'अत्र सर्वत्र' नास्ति–क., 'सर्वत्र' नास्ति–ग.। १३. पुनरपि–क.। १४. रूपा–ख.। १५. म्यामत्राधार–क. ग.। १६. मदन–क.। १७. मन्त्र–क.। १८. मायाबीजं–घ.। १९. 'अयं स वाग्भव इति प्रसिद्धो' नास्ति–ख. ङ. ज.। २०. यतीत्यर्थं –ख. घ. ङ. ज.।

विद्यां तु नवमीं सम्यक् प्रवक्ष्यामि समासतः।
कीलिता[1] या रहस्यान्मादनेत्यादितः[2] क्रमात्॥
मादनः[3] प्राणरूपस्तु[4] विकासः शिव[5] उच्यते।
सकारस्त्वपरो ज्ञेयः संकोचः शक्तिरूपवान्[6]॥
संकोचः परमा शक्तिर्[7]विकासः परमः शिवः।
संकोचश्च विकासश्च हंस[8] इत्यक्षरद्वयम्॥
तयोराधाररूपेण[9] कर्तनं[10] विन्दुमालिनी।
प्राणो विन्दुरिह[11] प्रोक्तः साहचर्यादपानके॥
अधो[12] धरेन्द्रमाकाशं[13] ज्वलनं च[14] तयोरधः।
मायाविन्द्वर्ध्वगो[15] चैव वाग्भवोऽसावकीलितः[16]॥ इति।

श्रीहंसपारमेश्वरेऽपि[17]—

मा शक्तिस्तु समाख्याता दनं स्वीकार[18]कृच्छिवः।
स[19] वै मादन इत्युक्तो हकारः शिवसंज्ञकः॥
तत्र[20] शक्तियथार्थत्वे[21] सकारत्वं[22] विधीयते।
शिवे[23] हकार इत्युक्तः सकारे[24] शक्तिरव्यया॥
विन्दुमालिनिकार्णस्य पर्यायं परमेश्वरि[25]।
शक्रव्योमानलार्णा[26] ये मायाविन्द्वीश्वरादयः॥
यथा स्थिताश्च[27] तत्तथ्या वाग्भवः स[28] निराविलः।
द्वावन्यौ कामशक्त्याख्यौ वर्णौ निष्कीलितात्मकौ[29]॥ इति।

---

१. कीलितानि–क., ललिताया महाविद्या–चि.। २. त्यादिभिः–क.। ३. मादनं–क. ख.। ४. पं तु–ख. ग. घ.। ५. परमः शिवः–क., जीव उच्यते–ख. ग.। ६. रूपत–चि.। ७. 'शक्तिर्वि' अत्रैव क्रमातृकासमाप्तिः। ८. हंस–चि.। ९. रूपे तु–ख.। १०. कर्तव्यं–चि.। ११. रिति–ख.। १२. अधो–ख.। १३. काश–ग.। १४. तु–चि.। १५. ध्वंगो–चि.। १६. सावकीलकः–ग., नाम कीलितः–चि.। १७. पर–चि., सारेऽपि–ख.। १८. रकः शिव–ख, रकः शिव–ग. घ.। १९. स वै–ख., सैव–चि.। २०. तस्य–चि.। २१. योर्थं–चि.। २२. रत्य–ग. घ., ट स–चि.। २३. शिवो–ख. ग. चि. टी.। २४. सकारः–चि. टी.। २५. श्वरे–ग. घ., श्वरम्–चि.। २६. र्णाश्च–चि.। २७. नि तत्तथ्यं–ख. ग. घ.। २८. स्थानि–ख., यं सनिरानिलः–चि.। २९. निष्कलकात्मकौ–चि.।

**शिवबीजं त्रिधा युक्त्वा सृष्टिस्थितिलयक्रमैः[2] ॥ ११३ ॥**
**द्वयमाद्येन रहितमाद्याधो मदनाक्षरम् ।**
**पुनः स्थितिशिवाधस्तादिन्द्रबीजं नियोजयेत् ॥ ११४ ॥**

---

अत्र त्रिपुरसुन्दरीकल्पलतायामभियुक्तोक्तिः—

प्राणो देवीसखाद्यो दशशतनयनः शम्भुरपि[3]त्रिमूर्तिः
शून्यश्चन्द्रार्धनादैः शिखिरुचिरुचिरो वाग्भवोऽसावकीलः ॥ इति ।

ऐन्द्रं[4] लकारः । आकाशबीजं[5] हकारः । ज्वलनाक्षरं[6] रेफः । माया ईकारः । बिन्द्वीश्वरौ प्राग्वत्[1] । अयं स वाग्भव इति । एवमुद्धृतोऽयं वाग्भव इत्यर्थः[7] ॥ १११–११३ ॥

कामराजबीजमाह—शिवबीजं त्रिधा युक्त्वेति । शिवबीजं हकारः । अयमर्थः—सृष्टिस्थितिसंहारक्रम[8]वृद्धया हकारत्रयं योजयेदिति । द्वयमाद्येन रहितमिति । स्थिति[10]संहारात्मक[9][11]हकारद्वयमाद्येन सकारेण रहितमित्यर्थः ।

---

शिवबीजं त्रिधा कृत्वा सृष्टिस्थितिलयक्रमादिति[12] । शिवबीजं शवर्गचतुर्थमक्षरम् । तत्[13] सृष्टिस्थितिलयक्रमात् त्रिधा कुर्यादित्यर्थः । द्वयमाद्येन रहितमिति । स्थितिलयात्मकशिवाक्षरद्वयमाद्येन चन्द्रबीजेन[14] रहितं कुर्यादित्युक्तं[15] भवति । द्वयमाद्येन रहितमित्युक्त्या सृष्टिशिवस्याधःस्थाने आद्योपेतं कुर्यादिति "अप्रतिषिद्धमनुमतम्" इति न्यायेनार्थात् संपद्यते । अन्यच्च, समानबलयोरुभयोः प्रकृतयोः सतोस्तयोर्मध्येऽन्यतरे निषिद्धेऽन्यतरस्यापरिहार्यत्वं संपद्यते । आद्याधो मदनाक्षरमिति । आद्यस्य चन्द्रबीजस्य अधः[16]स्थाने द्वितीयवर्गाद्यमक्षरं प्रक्षिपेदित्यर्थः । पुनः स्थितिशिवाधस्तादिति । मदनाक्षर-

---

१. कृत्वा—धाग. अ. से. म. सक. ख. ग. घ., युङ्क्त्वा—धाक. ख. । २. क्रमात्—धाग. अ. से. सक. । ३. शङ्करोऽपि—ख. । ४. दम्भुति—ख. । ५. 'आकाशबीजं हकारः' नास्ति—ख. । ६. ज्वलनो—ख. । ७. इति—ख. । ८. 'क्रम' नास्ति—ख. । ९. रमत्र—ख. । १०. 'स्थिति' नास्ति—घ. । ११. त्मकं हरमिति द्वय—ख. । १२. क्रमेरिति—ख. ङ. ज. । १३. तं—ख. घ. ङ. ज. । १४. 'चन्द्रबीजेन' नास्ति—ख. घ. ङ. ज. । १५. कुर्यात् । आद्यं चन्द्रस्तेन रहितं कुर्या—ख. ङ. ज. । १६. 'अधः' नास्ति—क. ग. छ. ।

1. प्राग्वदिति । "बिन्दुरनुस्वारः" (पृ. ९०, प. १३), "ईश्वरः कला" (पृ. ९४, प. ७) इति ।

तथा लयशिवाधोऽपि ज्वलनं[1] च महेश्वरि ।
चतुर्थस्वरसंयुक्तं बिन्दुखण्डेन्दु[2]लङ्कृतम् ॥ ११६ ॥
एवमेतन्महाबीजं कामराजं महोदयम् ।

सामर्थ्यात् सृष्टिशिवा[3]धःस्थाने सकार[4]बीजमस्तीति प्राप्तम्, "[5]अप्रतिषिद्ध-मनुमत(म्" इति)न्यायेन । एवमादितो हंसबीजं सि[6]द्धम् । आद्याधो मदनाक्षरमिति । आद्यस्य सकारस्याधःस्थाने ककार[8]बीजं भवती[7]त्यर्थः । पुनः स्थितोति[9] । अस्यार्थः—मध्यमशिव[10]बीजस्य हकारस्याधःस्थाने, इन्द्रबीजं लकारम्, नियोजयेदिति । तथा लयेति । ज्वलनं रेफः । अयमभिप्रायः—संहारशिव[12]रूपतृतीयहकारस्याधःस्थाने रेफं नियोजयेदिति । चतुर्थ-स्वरबिन्दुखण्डेन्दवः प्राग्वत्[1] । एवमेतदिति । एवमुद्धृतं कामराजबीज[13]-मित्यर्थः ॥ ११३–११६ ॥

स्याधः[14]स्थाने स्थितो यः स्थि[15]तिशिवस्तस्याध[16]स्ताद् अधःस्थाने । इन्द्रबीजं नियोजयेत् । माधवीबीजं नियोजयेदित्यर्थः । तथा तेन प्रकारेण । पूतनाबीजस्याधःस्थाने स्थितो यो लयशिव, ज्वलनार्णं महे[17]श्वरीति, तस्य लयशिवस्याधःस्थानेऽसृग्बीजं नियोजये-दित्यर्थः । चतुर्थस्वरसंयुक्तमिति । शान्त्यक्षरं नियोजयेदित्यर्थः । बिन्दुखण्डेन्दलङ्कृतमिति । एवमुद्धृतं बीजं बि[18]न्दुनादकलान्वितं कुर्यादित्यर्थः । एवमेतन्महाबीज कामराजं महोदय-मिति । एवमुद्धृतं कामराजं न नामतः कामराजम्, अर्थतोऽपि महोदयं सकलपुरुषार्थ-साधनमित्यर्थः ॥ ११३–११६ ॥

१. ज्वलनार्णं–वाग. अ. से, सक, ख. ग. घ., ज्वलनं तु–ङ. । २. न्दुसंयुतम्–से. । ३. शिवस्थाने–ख. । ४. सकारं–ग. । ५. अत्राप्रति–ग. । ६. ससि–घ. । ७. हका–ख. । ८. ककारं–ग. । ९. स्थितय–ग. घ. । १०. मध्यमशि–ख. । ११. हपस्य–ख. । १२. शिवरूपस्या–ख. । १३. 'बीज' नास्ति–ख. । १४. य स्थितो–क. ग. छ. । १५. 'स्थिति' नास्ति–क. ग. घ. छ. । १६. 'अधस्तात्' नास्ति–ख. घ. ङ. ज. । १७. महेश्वरीति–ख. ङ. ज. । १८. 'बिन्दु' नास्ति–क. ग. छ. ।

1. प्राग्वदिति । "चतुर्थस्वर ईकारः" ( पृ. ९१, प. ६ ), "बिन्दुरनुस्वारः" ( पृ. ९०, प. ११ ), "अर्धेन्दुः कला" ( पृ. ९०, प. १२ ) इति ।

मायाबीजं महेशानि मादनं शक्रसंयुतम् ॥ ११६ ॥
चन्द्रबीजं केवलं तु विनियोज्य वरानने ।
त्यक्त्वा सृष्टिक्रमं देवि प्रागुद्धारक्रमेण तु ॥ ११७ ॥
संहारक्रमयोगेन शक्तिबीजं समुद्धरेत् ।

---

शक्तिबीजमाह—मायेति । मायाबीजं भुवनेश्वरीबीजम् । हे महेशानि ! महेशानस्य महाभैरवस्य आत्मभूते । मादनशक्रौ [1]प्राग्वत् । चन्द्रबीजं सकारः । केवलमिति । शिवबीजसंयोगवर्जितमित्यर्थः । तुरवधारणे । संहारक्रमयोगेनेति । वाग्भवकामराजबीजवत्रानुलोमेन शक्तिबीजोद्धारः, किन्तु विलोमेनेत्यर्थः । इह विद्यायां त्रिष्वपि बीजेष्वन्तःस्थातृतीयमस्तीति,

---

मायाबीजं महेशानीति । मायाबीजं भुवनेश्वरीबीजम् । मादनं विसर्गान्तम् । [2]शक्रसंयुतम् । शक्रो मांसबीजम्, तत्समायुक्तं तदुपेतम् । कोऽर्थः ? भुवनेश्वरीबीजस्योर्ध्वे लकारं नियोजयेत् । लकारोपरि ककारं योजयेदित्यर्थः । चन्द्रबीजं केवलं त्विति । हकारवर्जितं केवलं चन्द्रबीजमेवादौ योजनीयं हे वरानने ! इत्यर्थः । त्यक्त्वा सृष्टिक्रमं देवि प्रागुद्धारक्रमेण त्विति । कामराजबीजस्योद्धारावसरे यः क्रमोऽसौ सृष्टिक्रमस्तं सृष्टिक्रमं त्यक्त्वा तत्रैव शक्तिबीजोद्धारावसरे संहारक्रम इति मन्तव्यम् । न तत्रोद्धारक्रम उक्तः । उद्धारक्रमस्तु पूर्ववत् । सृष्टिक्रम एवेत्यर्थः । पूर्वोद्धृतकामराजबीजे आदिमध्यहकारद्वयलोपात्तदेव शक्तिबीजं भवतीत्यर्थः । इदमुद्धृतं तार्तीयं बीजं शक्तिसंज्ञं सकलसामर्थ्ययुक्तम् ।

---

१. घ–सक. । २. योज्यं–वाक. ख. । ३. गुच्चार–वाक. ख. । ४. नेश्रीबी–ख. । ५. 'हे महेशानि⋯आत्मभूते' नास्ति–ख. । ६. 'बीज' नास्ति–ख. । ७. यान्त्र–ग. घ. । ८. 'इति' नास्ति–ग. घ. । ९. 'मायाबीजम्' इत्यत आरभ्य ४ पटल २४ श्लोकस्य 'प्रथमबीजमम्' इति पावन्नास्ति–घ. । १०. भुवनेशी–ख. ङ. । ११. मादन–ख. । १२. नीयमिति–ख. ङ. ज. । १३. क्रमो–ख. ङ. ज. । १४. संहारक्रमेणबोद्धारक्रम–ख. ङ. ज. । १५. तुच्चार–ख. ङ. ज. । १६. शिवशक्ति–ख. ङ. ।

1. प्राग्वदिति । 'मदनः कामः⋯शक्रो लकारः' (पृ० १००, प० ७-८) इति ।
2. "ये तु शक्रसंयुतमिति मायाबीजविशेषणत्वेन व्याचक्षते⋯" (वि. पृ. ६७) ।

सम्प्रदायस्य कश्मीरोद्भूतत्वात्, योगिनीप्रधानतया विद्यायाः प्राकृतभाषाविशेषत्वाच्च यथासम्प्रदायं तस्य व्यवहार इत्युपदेश.। इयं विद्या सुभगोदयेऽपि न लिखिता, अतिरहस्यत्वात् ॥ ११६-११८ ॥

---

अत्र लोपामुद्रामते वाग्भवोद्धारे स्वागमसम्प्रदायविशेषोऽस्तीति[1][2]। तद्यथा—मादनमिति मादयतीति[3] मादनमिति व्युत्पत्त्या शक्त्युपभोक्तुः शिवस्याभिधानम्[4]। तदय शक्तिरिति मौनसस्याभिधानम्। तदन्तर्विन्दुमालिनीति तुण्डस्याभिधानम्। ऐन्द्रमाकाशबीजस्थमित्यादि यथापूर्वं द्रष्टव्यम्। तदुक्तं हसपारमेश्वरे रससारसंग्रहे च—

विद्यां तु नवमीं सम्यक् प्रवक्ष्यामि समासतः।
कीलिता या रहस्यत्वान्मादनेत्यादितः क्रमात्॥
मादनः[5] प्राणरूपस्तु विकासः शिव उच्यते।
सकारस्त्वपरो ज्ञेयः संकोच. शक्तिरूपवान्॥
संकोचः परमा शक्तिर्विकासः परमः शिवः।
संकोचश्च विकासश्च हंसं[10] इत्यक्षरद्वयम्॥
तयोराधाररूपेण चैतन्ं[11] विन्दुमालिनी।
प्राणो विन्दुरिति प्रोक्त साहचर्यादपानके॥
अधो[12] धरेन्द्रमाकाशं ज्वलनं च[13] तयोरधः।
मायाविन्दूर्ध्वगो[14] चैव वाग्भवोऽसौ[15] वकीलित ॥ इति।
मा शक्तिस्तु समाख्याता दनं[16] स्वीकारकृन्छिय।
सं[17] वै मादन इत्युक्तो हंकारः[18] शिवसंज्ञकः॥
तत्र शक्तिर्यथोर्ध्वत्वे[19] सकारत्वं[20] विधीयते।
शिवे हकार इत्युक्त सकारे[21] शक्तिरव्यया॥

---

१. मुखागम–ख., स्वनाम–ग., मुखादिम–ङ, मुखागमनं–ज.। २ 'इति' नास्ति–ख. ङ. ज। ३. 'मादयतीति मादनमिति' नास्ति–क. ग. छ। ४ यान मादनमिति–ख. ङ ज। ५. मादन–ख. ङ. ज। ६. ललितायां महादेव्या–चि। ७. मादनं प्राणरूपं तु–क. ख. ग. ङ. छ. ज.। ८. रस्यं पर–क. ग. छ.। ९. स्पत–चि.। १०. हस–ख. ङ. छ ज. चि.। ११. चवर्णं–क. ग. छ, कर्तव्य–चि.। १२. अधो–ङ. ज. चि.। १३. तु–चि.। १४. र्ध्वगा–ख. ङ. ज. चि.। १५. नाम कीर्तित–चि.। १६. तन्या–क. ग. छ.। १७. एवं मादनमित्युक्त–क. ख. ग. छ.। १८. हकार शिवसंज्ञकम्–ख. ग. ङ. छ.। १९. यथोर्ध्वत्वे–चि.। २०. रत्व–ङ. ज., र. स–चि.। २१. सकार–क. ग. छ. चि।

एवमेषा महाविद्या महात्रिपुरसुन्दरी ॥ ११८ ॥
संस्मृतैव महादेवि त्रैलोक्यवशकारिणी ।
एतयैतस्य चक्रस्य साधकोऽर्चनमारभेत् ॥ ११९ ॥

विद्यास्तुतिः क्रियते—एवमेषेति । संस्मृतैव चिन्तितैव । जपादिवैधुर्येणेत्यर्थः । अनया चक्रार्चनमारभेदित्याह—एतयैतस्येति । एतया विद्यया ॥ ११८-११९ ॥

---

बिन्दुमालिनीकार्णस्य पर्यायं परमेश्वरि ।
शक्त्योमानलार्णा ये मायाबिन्द्वीश्वरादयः ॥
यथा स्थिताश्च तत्तथ्या वाग्भवः स निराविलः ।
द्वावन्यौ कामशक्त्याख्यौ वर्णौ निष्कीलितात्मकौ ॥ इति ॥११६-११८ ॥

एवमेषा महाविद्या महात्रिपुरसुन्दरीति । एवमेषा त्रिबीजात्मिका विद्या महाविद्या सकलविद्यानां मध्ये उत्तमा विद्येत्यर्थः । का सा विद्या ? महात्रिपुरसुन्दरीवाचिकेत्यर्थः । एवं मूलविद्यामुद्धृत्य तस्याः सामर्थ्यं वर्णयति—संस्मृतैव महादेवी त्रैलोक्यवशकारिणीति । संस्मृतैव संस्मृतिमात्रेणैव । इयं महाविद्या त्रैलोक्यं साधकस्य वशे करोतीत्यर्थः । एवमेतस्य चक्रस्य साधकोऽर्चां समारभेदिति । यस्तावदस्यां त्रैलोक्यमोहिन्यां महाविद्यायां कल्याणदेशिककटाक्षतो लब्धचतुर्विधाभिषेकः सन्ध्यातर्पणसविशुद्धात्मलोकपालवास्तुस्वासनादिसपर्यापुरस्सरं कृतन्यासमण्डलः, तस्य महात्रिपुरसुन्दर्याश्चक्रस्य अर्चां समारभेत् प्रारभेदित्यर्थः । तत्र सन्ध्यावन्दनन्यासमण्डलार्घशुद्धिपर्यन्तं श्रीमहात्रिपुरसुन्दरीकल्पलतायामुक्तप्रकारेण द्रष्टव्यम् । एवं मन्त्रप्रमेयनिरूपणं कृतम् । इतः परं पूजाप्रयोगमुद्रादिक्रमेण तदङ्गभूतं द्रष्टव्यम् ॥ ११८-११९ ॥

---

१. एषा विद्या—खग. । २. महेशानि—वाग. से. सख. । ३. एवमे—अ. भ. संक. ग. । ४. कोऽर्चां स—अ. । ५. चरेत्—ब. । ६. पर्यायः—क. ग. । ७. भरे—ड., भरम्—चि. । ८. र्णास्ते—क. ग. छ., र्णाश्च—चि. । ९. नि कर्तव्य—क. ग. छ. । १०. वाग्भवं सनिलानिलः—चि. । ११. नाद—क. ग. छ. । १२. निष्कलकात्मकौ—चि. । १३. बीजानां—ख. ड. ज. । १४. 'एव' नास्ति—क. ग. छ. । १५. वशो—ख. ड. । १६. 'कटाक्षतो' नास्ति—क. ग. छ. । १७. समर्पण—ख. ड. ज. । १८. 'वन्दन' नास्ति—क. ग. छ. । १९. 'एवं…द्रष्टव्यम्' नास्ति—क. ग. छ. । २०. मुद्राप्रयोगे—ख. । २१. मन्तव्यम्—ड. ज. ।

कुङ्कुमारुणदेहस्तु[1] वस्त्रा[2]रुणविभूषितः ।
[3]ताम्बूलपूरितमुखो धूपामोदसुगन्धि[4]तः ॥ १२० ॥
कर्पूरक्षोददिग्धाङ्गो रत्ना[5]भरणम[6]ण्डितः ।
रक्तपुष्पावृतो योगी[7] रक्तगन्धानुलेपनः ॥ १२१ ॥
रक्तासनो[8]पविष्टस्तु लाक्षारुणगृहस्थितिः[9] ।
सर्वशृङ्गारवेषाढ्यस्त्रिपुरीकृतविग्रहः ॥ १२२ ॥
मनःसंकल्परक्तो[10] वा साधकः स्थिर[11]मानसः ।

---

सार्धत्रिभिरर्चकस्य गुणविधिमाह—कुङ्कुमारुणेति । अत्र पूजामखे[12] प्रायश. सर्वं वस्तुजातमरुणाधिकरणपूर्वपक्षनिर्णय[13]वदिति[1] पिण्डार्थ. । रत्नाभरणं रत्नसयुक्ताङ्गदादि । योगी[14] नित्यसमावेशयुक्त । सर्वशृङ्गारवेषाढ्यः तिलकाञ्जनमृगमदा[15]त्युज्ज्वलावयवविशेष । स्थिरमानसः अचञ्चलमना.[16] ।

---

कुङ्कुमारुणदेहस्त्वित्यारभ्य खेचर्या शक्तिचक्र तु क्षमस्वेति विसर्जयेदित्यन्तेषु श्लोकेषु विषमपदव्याख्या लिख्यते । कर्पूरक्षोद इति कर्पूरचूर्णम् । रक्तपुष्पावृत इति प्रथमावं-

---

१. देहश्च–सख.। २. वस्त्राभरण–ब., रक्तवस्त्रादिसयुत –वाग से , रक्तवस्त्रादिभूषित – सक. ख. घ. । ३. एषा पङ्क्तिर्नास्ति–ब.। ४. न्धिभि –सख. ग. । ५. रक्ता–वाक. ख. ग., रक्षा–ब. । ६. भूषित –च. सक. ख घ. । ७. मौनी–वाक. ख ग. ब सक. ग. । ८. रक्तास्तरो–वाग. से. । ९. स्थित –वाग. सक. ग., गृहे स्थित –से. ब सख. घ. । १०. युक्तो–सग., रक्त–वाग. । ११. सुस्थिरासन –सक. । १२. मुखे–ख. । १३. विनि–ख. । १४. योगिनी–ग. घ. । १५. दाद्यु–ख. घ. । १६. अचलमना –ब., नास्ति–घ. ।

1. अरुणाधिकरणपूर्वपक्षनिर्णयवदिति । पूर्वमीमांसाया तृतीयाध्याये प्रथमपादे षष्ठमरुणाधिकरणम् । अस्यायमभिप्राय –"अरुणया पिङ्गाक्ष्या एकहायन्या सोम क्रीणाति" (तै. स. ६।१।६।७) इत्यत्राऽरुणयेति तृतीयया आरुण्यगुणस्य क्रयसाधनत्व प्रतीयते । न चामूर्तस्य गुणस्य तत्सभवति । अतो वाक्यस्येहाविनियोजकत्वात् प्रकरणमेव विनियोजक ग्राह्यम् । ततश्च सोमप्रकरणे यानि ग्रहचमसादीनि द्रव्याणि सन्ति तानि सर्वाण्यपि परिच्छिद्य तेन द्वारेणारुण्य साधन भवतीति पूर्वपक्षन्याय । तेन न्यायेनात्रापि पूजायामुक्तो रक्तवर्णं पूजासाधनसर्वद्रव्यपरिच्छेदक इत्यायाति । अतो रक्तवर्णतयोक्तान्यनुक्तानि च पूजाद्रव्याणि रक्तान्येव सपादनीयानि । इह पूर्वपक्षन्यायोऽपि निर्णयहेतुतयाऽभ्युपेयते, बाधकाभावादिति ।

भूप्रदेशे समे शुद्धे गोमयेनोपलेपिते ॥ १२३ ॥
पुष्पप्रकरसंकीर्णे धूपामोदसुगन्धिते ।
सिन्दूररजसा देवि कुङ्कुमेनाथवा पुनः ॥ १२४ ॥
आलिखेत् प्रथमं चक्रं समरेखं मनोहरम् ।
समत्रिकोणशक्त्यग्रं समाश्रमतिसुन्दरम् ॥ १२५ ॥

---

अवहिर्मुख इत्यर्थ. । उक्तं च—

"चपल. सर्वजन्तूना द्वेष्यो भवति भारत" इति ॥ १२०-१२३ ॥

पूजाचक्रविन्यासस्थलस्य गुणविधिमाह—भूप्रदेश इति । अत्र प्रदेश-शब्द. स्थलवाची । यथाह भगवान् व्यासमुनिः—

"प्रदेशेष्वपि राष्ट्राणा कृत युगमवर्तत" (म० भा० १।१०८।५) इति । समे निम्नोन्नतविवर्जिते । शुद्धे यजनार्हे । चक्रराजविन्यासद्रव्यमाह—सिन्दूरेति । पूजाचक्रविन्यासे गुणविधिमाह—आलिखेदिति । प्रथमन्यास-

---

वम्[1] । तदुक्तं [2]कुण्डगोलोन्मिश्रित गोरोचनाभावित कुङ्कुमादिपङ्कमिश्रितम् । (तेन) सर्वाङ्गमनुलिप्येति भावः । सर्वशृङ्गारवेषाढ्य इति । शृङ्गारो भावरसस्थितिप्रेक्षणादि-लक्षण. । वेषः स्त्रीरूपधारित्वम् । त्रिपुरीकृतविग्रह इति । न्यासादिना देवीवपुर्भूत्वेति भावः । स्थिरमानस इति चित्तैकाग्र्य कृत्वेति ॥ १२०-१२३ ॥

---

१. पं–सग. । २ कौसुम्भे–सग । ३. रमम्–वाक. ख. ब अ. सग. घ. । ४. कोण–अ. गघ । ५. शक्तीक–सख., शक्त्यभ्र–सघ. । ६ समास्र चाति–वाग. से., सभीक–वाक ख. ब अ. । ७. इत परम्—"हेमादिपात्रे साधारे स्थापयेदर्घ्यमम्बुना । रोचनाचन्द्रकाश्मीरलघुकस्तूरिकायुतम् ॥ भावयेद्वह्निसूर्येन्दुमूलानि परमेश्वरि । जपेच्च दशवार तत्पर्येत्तेन योगिनी ॥" इति श्लोकद्वयमधिक दृश्यते–वाग से. सक. । ८. 'उक्त च 'इति' नास्ति–ख. । ९ फलस्य–ग. । १०. स्थिर–ख. । ११. 'युक्त' नास्ति–ख. ड. ज. । १२ गम्, अथवा पत्रलतादिलक्षणम्–ख ड. ज. । १३. स्वेत्यर्थ –ख. ड. ज. ।

1. "यत्तु रक्तपुष्पावृत इत्युत्तरत्र विशेषण तस्य प्राय(पाश्च)मिककुण्डगोलोत्यपरतया साम्प्रदायिकैर्व्याख्यानान्न पौनरुक्त्यम्" (से. पृ. ६९)

2. कुण्डगोलोन्मिश्रितमिति। अत्र जयरथ —"अघ इति कुण्डगोलकाख्यो द्रव्यविशेष'। शक्तिसगमा-दिति आद्ययागतया वक्ष्यमाणात्" (पृ० १४-१५) इति, "नन्दस्य आनन्दस्य हेतुभि सुरादिभि, फलैश्च कुण्डगोलकादिभि" (पृ० १८) इति, 'विद्राव्य गोलक तत्र कुण्ड च तनुमध्यमे ।

ततः पद्मनिभां देवीं बालार्ककिरणारुणाम् ।
जपाकुसुमसंकाशां दाडिमीकुसुमोपमाम् ॥ १३० ॥
पद्मरागप्रतीकाशां कुङ्कुमोदकसंनिभाम् ।

---

किञ्च, अर्थत. सर्वज्ञतादीनि षडङ्गानि । तदुक्तम्—

सर्वज्ञता तृप्तिरनादिबोध. स्वतन्त्रता नित्यमलुप्तशक्ति. ।
अनन्तशक्तिश्च विभोर्विधिज्ञा. षडाहुरङ्गानि महेश्वरस्य ॥ इति ।
( वा० पु० १२।३३ )

शिरोललाटेति । [1]गोचरे स्वाधिष्ठाने । आधारे मूलाधारे । [2]व्यूहकं यावद् [1]यावद् व्यूहकम्, पादतलावधीत्यर्थ. । अष्टभिः वशिन्यादिभि. । एतेषा करशुद्ध्यादिन्यासप्रकार. सुभगोदये द्रष्टव्य. ॥ १२६-१२९ ॥

तत इत्यादिसार्धैकोनविंशत्या ध्यानमाह । पद्मनिभामिति सकोचविकासात्मकं धर्मद्वय लक्ष्यते । बालार्ककिरणारुणामिति रक्तवर्णत्वे प्रकाशात्मता लक्ष्यते सुसेव्यता च । जपाकुसुमसङ्काशामिति रक्तवर्णत्वे बहुलता

---

पद्मनिभाम् आह्लाददायिप्रभाम् । बालार्ककिरणारुणामिति । अनुमहसेव्यशोभामित्यर्थः । जपाकुसुमसङ्काशामिति । देव्यङ्गगतारुणिमोदाहरणमिति भाव. । दाडिमीकुसुमोपमामिति । सान्द्रप्रभामिति भाव । पद्मराग इति । अत्युज्ज्वलकान्तिमित्यर्थः ।'

१. जवा—सग. घ. । २. मप्रभाम्—सघ. । ३. 'यावद् व्यूहक' नास्ति—ख. । ४. कमला—ग. । ५. दीना—घ. । ६. 'सकोच · लक्ष्यते' इत्यस्य स्थाने 'रक्तवर्णत्वेऽतिस्निग्धता लक्ष्यते, प्रत्ययधर्माधर्मद्वय लक्ष्यते' इति पाठ—ग. । ७. 'क' नास्ति—घ. । ८. उक्त—ख. । ९. वेपता—ख. ग. । १०. 'जपा ·लता लक्ष्यते' नास्ति—ग. । ११. बहुलात्मता—घ. । १२. 'सेव्य' नास्ति—क. ग. छ. ।

श्रीमहात्रिपुरसुन्दरि मां रक्ष रक्षेत्येवमेव मन्त्र जातियुक्त हृदयादिषु योजयन्ति"
( से. पृ. ७६ ) ।

1. "मध्यास्तु—गोचरपदस्य लिङ्गार्थकत्व प्राचीनैन्वत प्रमाणाभावादनाहृतमभिप्रेत्य……"
( से. पृ ७७ ) ।

2 "व्यूहकं यावदित्यस्यापाठात् पादाग्रान्तमित्यर्थमाहु सम्प्रदायिका" ( से. पृ. ७७ ) ।

स्फुरन्मुकुटमाणिक्यकिङ्किणीजालमण्डिताम्[4] ॥ १३१ ॥
कालालि[1]कुल[2]संकाश[3]कुटिलालकपल्लवाम् ।
प्रत्यग्रारुणसंकाशवदनाम्भोजमण्डलाम् ॥ १३२ ॥
किञ्चिदर्धेन्दुकुटिलललाटमृदुपट्टिकाम् ।
पिनाक[5]िधनुराकारसुभ्रुवं[6] परमेश्वरीम् ॥ १३३ ॥
आनन्दमुदितोल्लोललीलान्दोलितलोचनाम् ।
स्फुरन्मयूखसंघातविततस्वर्णकुण्डलाम्[8] ॥ १३४ ॥
सुगण्डमण्डलाभोगजितेन्द्वमृतमण्डलाम् ।
विश्वकर्मादिनिर्माणसूत्रसुस्पष्टनासिकाम्[9] ॥ १३५ ॥
ताम्रविद्रुमबिम्बाभरक्तोष्ठीममृतोपमाम्[10] ।
स्मितमाधुर्यविजितमाधुर्य[11]रससागराम्[12] ॥ १३६ ॥
[13]अनौपम्यगुणोपेतचिबुकोद्देशशोभिताम् ।
कम्बुग्रीवां विशालाक्षीं[14] मृणाललिलितै[15]र्भुजैः ॥ १३७ ॥

लक्ष्यते । [16]दाडिमीकुसुमोपमामिति रक्तवर्णत्वे प्रकाशात्मता लक्ष्यते । पद्मरागप्रतीकाशामिति रक्तवर्णत्वे वर्णप्रभयोरपृथक्ता लक्ष्यते । कुङ्कुमोदकसन्निभामिति रक्तवर्णत्वे स्निग्धता लक्ष्यते । प्रत्यग्रशब्देन प्रथमोन्मेषो लक्ष्यते ।

---

कुङ्कुमोदक इति । [17]अच्छप्रभामिति भावः । प्रत्यग्रशब्देन ईषद्विकासोऽभिमतः । आदिनिर्माणमिति । प्रथमसृष्टिमिति[18] भावः । कम्बुग्रीवामिति । कम्बुः शङ्खः, तद्वत्त्रिरेखायुक्त-

---

१. कालाग्नि—सख. ग. घ. । २. कुरला—वाग. से. । ३. संकुलाम्—से. । ४. मण्डिताम्—सघ. । ५. पिनाक—वाग. से. सक. । ६. भ्रूलताम्—वाग. से. ब. सक., सुभ्रुवां—सघ. । ७. संकाश—मक. । ८. विलसद्धेम—वाग. से. ब. सक. ख. घ., विलसत् हेमकुण्डलाम्—सघ. । स्फुरदित्यादिपङ्क्तिद्वयं विश्वकर्मादीत्यादिपङ्क्त्युत्तरं दृश्यते—सघ. । ९. विस्पष्ट—वाग. से., वत् स्पष्ट—सघ. । १०. तेऽधरोम्—सक. । ११. शृङ्गार—सघ. । १२. गोचराम्—वाक. ख. । १३. अत्र—"करङ्कवाहिनेन्द्रेण दत्तताम्बूलवीटिकाम् । भुवनोत्पत्तिकल्याणकण्ठसूत्रविराजिताम् ॥ पुनर्नाशाद्दुरामिक्षुधनुःपुष्पशरौ तया । बाहुमूलेन केयूरकटकाङ्गदशोभिताम् ॥" इति पङ्क्तिचतुष्टयमधिकं वर्तते—सक. । १४. महादेवीं—वाग. से. ब. सक. ख. ग. घ. । १५. ललितैः—ब. । १६. 'दाडिमी…स्निग्धता लक्ष्यते' नास्ति—ख., 'दाडिमी…प्रकाशात्मता लक्ष्यते' नास्ति—ग. । १७. अत्युच्च—ङ. ज. । १८. रिति—ख. ङ. ज. ।

रक्तोत्पलदलाकारसुकुमारकराम्बुजाम् ।
कराम्बुजनख[2]ज्योत्स्नाविता[3]नितनभस्तलाम्[4] ॥ १३८ ॥
मुक्ताहारलतोपेतसमुन्नतपयोधराम् ।
त्रिवलीवलनायुक्तमध्यदेशसुशोभिताम् ॥ १३९ ॥
लावण्यसरिदावर्ताकारनाभिविभूषिताम् ।
अनर्घ्यरत्नघटितकाञ्चीयुक्तनितम्बिनीम् ॥ १४० ॥
नितम्बबिम्बद्विरदरोमराजिवराङ्कुशाम् ।
कदलीललितस्तम्भसुकुमारोरुमीश्वरीम्[9] ॥ १४१ ॥
लावण्यकदलीतुल्यजङ्घायुगलमण्डिताम्[11] ।
[12]नमद्ब्रह्मशिरोरत्ननिघृष्ट[13]चरणाम्बुजाम्[14] ॥ १४२ ॥
शीतांशुशतसंकाशकान्तिसन्तानहा[15]सिनीम् ।
लौहित्यजितसिन्दूरज[16]पादाडिमरागिणीम् ॥ १४३ ॥
रक्तवस्त्रपरीधानां पाशाङ्कुशकरोद्यताम् ।
रक्तपुष्पनिविष्टां[17] तु[18] रक्ताभरणम[19]ण्डिताम् ॥ १४४ ॥

चिबुकमित्य[20]धरमुख[21]फलकमुच्यते । कम्बुः शङ्खः । आवर्तः पयसा भ्रमः । काञ्ची रशनादाम । अङ्कुशः सृणि । शीतांशुलौहित्येति[22]भागाभ्या जगन्मातु-

सममीवामिति भावः । मृणाल इति पद्मनालम् । तद्वत्कोमलदीर्घभुजलता-

१. समा-वाक. स. अ. । २. द्योत-वाक. स., ज्योतिर्वि-व सख. घ. । ३. राजि-सख. । ४. स्थलाम्-से., स्थलम्-व. । ५. सयुक्त-से. सक. । ६. शोप-सख., दीन-सघ. । ७. खचित-व., छटित-सख. । ८. राज्यपरा-वाक स. राजिजिता-सघ. । ९. एतदनन्तरम्-'माणिक्यमुकुटाकारजानुद्वयविराजिताम्' इत्येषा पङ्क्तिरधिका-वाग. से. । १०. लावण्येत्यादिक श्लोको नास्ति-व. । ११. एतदनन्तरम्-'गूढ जिताम्' इत्यादिक १४६ सख्याक श्लोकोऽत्र दृश्यते-वाग. सो. सख. ग. । १२. ब्रह्मविष्णु-से. सक ग. घ., एषा पङ्क्तिश्च 'सर्वशृङ्गार' इत्यत पर दृश्यते-से. । १३. निघृष्ट-से सघ ग. घ. । १४. एषा पङ्क्ति १४७ श्लोकानन्तरं दृश्यते-से, नास्त्येव-सख. । १५. कारिणीम्-घ., हारिणीम्-सघ. । १६. जपा-सग घ. । १७. पद्म-वाक. स. ग. । १८. तां-से. सघ. । १९. भूषिताम्-से. सख. ग. । २०. परम्-स. । २१. 'मुखफलकमुच्यते' नास्ति-स. । २२. 'भागाभ्यां जग' नास्ति-स. ।

चतुर्भुजां त्रिनेत्रां[1] तु[2] पञ्चबाणधनुर्धराम्[3] ।
कर्पूरशकलोन्मिश्रताम्बूलापूरिताननाम्[4] ॥ १४५ ॥
[गूढगुल्फपदद्वन्द्वां[5] प्रपदाजितकच्छपाम् ।][6]
तनुदीर्घाङ्गुलीभास्वन्नखचन्द्रविराजिताम् ।
महामृगमदोद्दामकुङ्कुमारुणविग्रहाम् ॥ १४६ ॥
सर्वशृङ्गारवेषाढ्यां[7] सर्वालङ्कारभूषिताम्[8] ।
जगदाह्लादजननीं जगद्रञ्जनकारिकाम्[9] ॥ १४७ ॥
जगदाकर्षणकरीं जगत्कारणरूपिणीम्[10] ।
सर्वमन्त्रमयीं देवीं सर्वसौभाग्यसुन्दरीम्[11] ॥ १४८ ॥
सर्वलक्ष्मीमयीं नित्यां[12] परमानन्दनन्दिताम्[13] ।
महात्रिपुरमुद्रां तु स्मृत्वावाहनरूपया[14] ॥ १४९ ॥

रसीपोमात्मता लक्ष्यते। महामृगमदः कस्तूरिका ॥१३०-१४९ ॥

महात्रिपुरेतिद्वयेनावाहनपूजारम्भौ विधीयेते । महात्रिपुरसुन्दरीमुद्रां[15]

---

मित्यर्थः। मृगमद इति कस्तूरिका। शृङ्गार इति पत्रलवादिकपोलालङ्कार इति भावः॥ १३०-१४९ ॥

महात्रिपुरमुद्रा तु स्मृत्वेति। देव्यावाहनवेलायामन्तर्यागानन्तरमान्तर[16]मुद्रानवकमाधारादिब्रह्मरन्ध्रान्तनवाधारेषु परशक्तिविग्रह[17]रूपमनुस्मृत्यानन्तरमावाहयेदिति भाव.। सुभगे [1]नमस्कारनियुक्तयेति। सुभगे इति सुन्दरि। नम इति नमस्कारपदम्।

---

१. त्रिनयना-वाग. से.। २ च-सक. ख. ग घ.। ३. बाणां-सघ.। ४. ताम्बूल-सख.। ५. एतदनन्तरम्-'करण्डवाहिनेन्द्रेण दत्तताम्बूलपत्रिकाम्' इत्येषा पङ्क्तिर्दृश्यते-वाग से.। ६. 'गूढ जिताम्' न दृश्यते-वाक. ख.। ७. वेशा-वाव. ख. ग.। ८. भरण-सल.। ९. कारिणीम्-से. सक. ख. ग. घ । १०. रूपावर-सख.। ११. वर्धिनीम्-वाग.। १२. देवीं-सप.। १३. रूपिणीम्-सक. ख., कारिणीम्-सग, एतदनन्तरम्-'एव ध्यात्वा महादेवीं महात्रिपुरसुन्दरीम्' इत्येषा पङ्क्तिरधिका दृश्यते-सख.। १४. मुद्रया-सक., विद्यया-सग., एतदनन्तरम्-'आसनं तत्र सकल्प्य पूर्वोक्त चक्रमध्यत' इत्येषा पङ्क्तिरधिका दृश्यते-सघ.। १५. पुरसुन्दरीति-ख.। १६. 'आन्तर' नास्ति-ब ग. छ। १७. विग्रा-ख. ड. ज.।

1. "तस्मादर्थरत्नावलीकृदुक्तो नमस्कारेण युक्तयेति पाठ एव स्वीकार्य" ( से पृ. ८१-८२ )।

विद्ययावाह्य सुभगे नमस्कारान्तया[7] तया।
पूर्वोक्तया साधकेन्द्रो महात्रिपुरसुन्दरीम् ॥ १५० ॥
चक्रमध्ये तु संचिन्त्य ततः पूजनमारभेत्[2]।
शिवाग्निबिन्दवो देवि दिनकृद्वह्निबिन्दवः ॥ १५१ ॥
युगपत् क्रमरूपेण[3] योजनीया महेश्वरि।

[1]त्रिशिखाख्या[4] वक्ष्यमाणलक्षणाम्[5]। नमस्कारान्तया अन्ते नमस्कारवत्या। [2]तया पूर्वोक्तया "हंसबीजसमारूढाम्"[6] ( १।१०९ ) इत्यत्र। चक्रमध्ये सर्वानन्दमयाभिधेये स्थाने। संचिन्त्य बहि· सकलीकरणादिना भावेन महाविभूतियुक्तामपि सम्यगभेदेन चिन्तयित्वेत्यर्थः ॥ १४९-१५१ ॥

शिवाग्नीतिद्वयेन पूज्यदेवतानामादौ प्रयोज्य बीजद्वयमुद्धरति। शिवाग्निबिन्दवो हकाररेफानुस्वाराः। दिनकृद्वह्निबिन्दवः शकाररेफा-

कोऽभिप्रायः? [3]आवाहनविधानन्तरं त्रिपुरसुन्दरीति संबोध्य तदन्ते नम.पदं वदेदिति भावः ॥ १४९-१५१ ॥

शिवाग्निबिन्दव इति। शिवो हकार.। अग्नी रेफः। दिनकृत् शकारः। वह्निरिति रेफः। बिन्दुरनुस्वारः। ( पूर्ववत् ? )। युगपत् क्रमरूपेणेति। उद्धृतान्यक्षराणि यथायोग·

१. रनियुक्तया–वाक. ख. अ. सख. ग घ., रादियुक्तया–वाग. से. सक.। २. पूजां समा–वाग. सख. ग. घ., एव चक्रे तु सचिन्त्य क्रमात् पूजां समारभेत्–सक.। ३. योगेन–सख.। ४. त्रिशिखा–ख.। ५. माणाम्–ख.। ६. हंस–घ.। ७. वदिति–ख. ज., नास्ति–ङ.।

1. त्रिशिखाख्यामिति। ३।३–४ इत्यत्र प्रदर्शिता खण्डत्रयवती त्रिखण्डामुद्रेवात्र त्रिशिखापदेन परामृष्टा। "त्रिखण्डाख्याम्" ( पृ. ८० ) इति सेतुबन्धव्याख्यानम्।

2 तयेति। पूर्वोक्तया "हंसबीजसमारूढाम्" इत्यत्र पूर्वमुक्तया तयावाहनविद्ययावाह्येति यावत्।

3. पूर्वोक्तावाहनविद्ययाऽन्ते नमस्कारादेर्नम इहागच्छागच्छेतिवाक्यस्य योजन कृत्वा चक्रस्य मध्ये बिन्दुस्थाने देवीमावाह्य बिन्दुस्था पुनरपि ध्यात्वा पूजामारभेतेति यथाश्रुत केचिद् व्याचक्षते। अन्ये तु महात्रिपुरसुन्दरीं संक्षोभिण्यादियोन्यन्तमुद्रानवकं मूलाधारादिब्रह्मरन्ध्रान्तस्थाननवके स्मृत्वावाहनविद्याया अन्ते सुभगे नम इति पञ्चाक्षरीं संयोज्य देवीमावाह्य पूजयेदित्यर्थं इत्याहु" ( से. पृ. ८०–८१ )।

मायार्धेन्दुसमायुक्तं बीजयुग्मं[2] यदुत्थितम् ॥ १५२ ॥
मायालक्ष्मीमयं तेन यावत्[3] पूज्यास्तु मातरः ।
अणिमां[4] पश्चिमद्वारे लघिमामपि चोत्तरे ॥ १५३ ॥
महिमां[5] पूर्वद्वारे तु ईशित्वाख्यां तु दक्षिणे ।
वशित्वाख्यां तु वायव्ये प्राकाम्यामीशदेशके ॥ १५४ ॥

---

नुस्वारः । माया ईकारः । बीजयुग्मं बीजद्वयम् । उत्थितं निष्पन्नम् । मायालक्ष्मीमयम् । मायामय लक्ष्मीमय भुवनेश्वरीबीज[6] श्रीबीज च । तेन बीजद्वयेन । यावत् पूज्यास्तु मातर इति । यावत् साकल्येन । मातरः शक्तयः ॥ १५१-१५३ ॥

पट्त्रिंशद्भिः पूजामाह—अणिमां पश्चिमद्वार इत्यापटलान्तम्[7] । तत्र[8]

---

मेवर्दो[9] सयोजयेत् । ह्रैं[10] श्र इति । मायार्धेन्दुसमायुक्तमिति[11] । माया ईकार । अर्धेन्दु कला । एतदुद्धृतबीजयुगलस्य शिरोदेशे कृते ह्रीँ श्रीँ इतिभवतीतिभाव.। मायालक्ष्मीमयमिति । उद्धृतमेतद्[12] बीजयुग्म भुवनेश्वरीलक्ष्मीबीजमित्यर्थ. ॥ १५१-१५३ ॥

अत्र पश्चिमपूर्वमिति सर्वत्र यथाक्रममेव । [1]यदा पश्चिमाभिमुख. पूजक[13]स्तदा देवीपृष्ठत. पश्चिमं तत्पुरत पूर्वम्, यदा तु पूर्वाभिमुखस्तदा देवीपुरत. पश्चिम

---

१. कला–याग. अ से सग.। २. ग्ममुपस्थि–सक., ग्म समु–साघ.। ३ पूज्यास्तत्राष्ट-मातर–याक. ख अ., सपूज्या सर्वमातर–च., सपूज्या सर्वदेवता–सग । एतदनन्तरम्–'त्रिपुरा त्रिपुरेशी च सुन्दरी पुरवासिनी । श्रीमालिनी च सिद्धाम्बा महात्रिपुरसुन्दरी ॥ प्रकटाश्च तथा गुप्तास्तथा गुप्ततरा परा । नवधा चक्रयोगिन्यो नामभिस्ता समर्चयत् ॥' इति श्लोकद्वयमधिकम्–याग. से.। ४. अणिमामित्यादिश्लोकद्वय नास्ति–याक. ए., अस्य स्थाने ब्रह्माणीमित्यादिश्लोकद्वय वर्तते। अत्र सर्वत्र प्रथमान्त पाठ । ५ पूर्वद्वारे तु महिमा–से.। ६. ह्री–ग.। ७. त्याद्य–प.। ८. अणिमामित्यादिसार्धचतुर्भिस्तत्र–ग.। ९. या–ग. ङ. ज.। १०. ह्लसौरिति–क ग. ङ । ११. कला–क. ग. ङ.। १२. 'एतद्' नास्ति–क. ग. ङ.। १३. 'पूजक तु पूर्वाभिमुख' नास्ति–ग.।

1 'अत्र देवता तत्पूजायां दिक्पूज्यपूजकयोमध्य प्राचीति नियममेव कल्पतरवादिष्वपि केचिदाद्रियन्ते, अन्ये तु लोकसिद्धामेव प्राचीमाश्रयन्तो वदन्ति—यदा पश्चिमाभिमुख पूजकस्तदा

लिखेद् रोचनयैकान्ते प्रतिमामवनीतले ॥ २० ॥
सुरूपां चारुशृङ्गारवेषाभरणमण्डिताम् ।
तद्भालगलहृन्नाभिजन्ममण्डलयोजिताम् ॥ २१ ॥
जन्मनाममहाविद्यामङ्कुशेन विदर्भिताम् ।
सर्वाङ्गसन्धिसंलीनमालिख्य मदनाक्षरम् ॥ २२ ॥

---

लिखेदित्यादि । एकान्ते पशुजनदृष्टिविवर्जिते । प्रतिमां साध्यायाः । तद्भालेत्यत्र तच्छब्द प्रतिमा गृह्णाति । [1]भालशब्देनाज्ञास्थानं लक्ष्यते । जन्मशब्देन गुह्यस्थानम् । मण्डलशब्देन मूलाधारम् । जन्मनाम पितृभ्यां दत्तम् । महाविद्या मूलविद्या । अङ्कुशः क्रोङ्कारः । विदर्भिताम् । [2]विदर्भो द्व्यन्तरीकृत इति समयः । मदनाक्षरं कामबीजम् । तदाशाभिमुखः । साध्या यत्र वर्तते

---

लिखेदित्यारभ्य योजनान्ता शतादपीत्यन्तस्यायमर्थः—एकान्ते निर्जने स्थले । लिखित्वा प्रतिमां तस्या ललाटगलहृदयनाभियोनिषु जन्मनाममहाविद्यामङ्कुशान्तर्विदर्भितां लिखेत् । मातापितृभ्यां दत्तं जन्मनाम । महाविद्या मूलविद्या । अङ्कुशं क्रोङ्कारः । [3]आदावङ्कुशं ततो मूलविद्याक्षरद्वयं ततो जन्मनामाद्यमक्षरं साध्यायाः । अङ्कुशं पुनर्मूलविद्याक्षरद्वयं ततो जन्मनामद्वितीयाक्षरम् । एवं क्रमेण साध्यनाम मूलविद्यार्णपरिसमाप्तिर्यावत् तावत् पुनः पुनर्लिखेत् । पुनरप्यङ्कुशं दद्यात् । तदुक्तम्—[2]"विदर्भो द्व्यन्तरं प्रोक्तं" इति । मदनाक्षरं कामबीजम् । तदाशाभिमुखः साध्य-

---

१ भूषिताम्–वाग. से. सख. ग. । २. कपोल–सग. । ३. तल–वाक. ख. अ. सग. । ४. योषिताम्–वाक., एषा पङ्क्तिर्न दृश्यते–सख । ५. शान्तर्वि–वाग. से. सख. ग. घ । ६. न स–च. । ७. 'जन' नास्ति–ग. घ. । ८. तत्कालेत्यत्र–ख, घ, ङ, । ९. फाल–ख. ङ., भावशब्देन ज्ञात–ग. । १०. 'गल' नास्ति–ख. ङ ज. । ११. नामाक्षर–ङ. । १२. 'अङ्कुशं' नास्ति–ख. ङ. । १३. क्षर ततो–ख ङ., क्षर साध्याया पुनर्मूलविद्याक्षर ततो–ज. । १४. मूलार्ण–ङ. । १५. 'तावत्' नास्ति–क. ग. छ । १६. भूयो भूयो–ख. ङ. ज. ।

1 "केचित्तु भालपदमाज्ञाचक्रोपलक्षकं [जन्म]मण्डलपदं मूलाधारपरमिति वदन्तः षट्चक्रेषु विद्यां लिखेदित्याहुः" ( से. पृ. ११३ ) ।

2 "आदौ योनौ भवेदन्ते पल्लवः सम्पुटो द्वयोः । एकान्तरं तु ग्रथनं विदर्भो द्व्यन्तरीकृतः ॥" ( १।७२ ) इति कादिमताख्ये तन्त्रराजे दृश्यते ।

3 "ये त्वङ्कुशोत्तरं विद्याक्षरद्वयं ततो जन्मनामाक्षरमिति व्याचक्षते ।" ( से पृ ११३ ) ।

तदाशाभिमुखो[1] भूत्वा त्रिपुरीकृतविग्रहः ।
[2]बध्वा तु क्षोभिणीं[3] मुद्रां विद्यामष्टशतं[4] जपेत् ॥ २३ ॥
नियोज्य[5] दहनागारे चन्द्रसूर्यप्रभाकुले[6] ।
ततो विचलिता[7]पाङ्गी[8]मनङ्गशरपीडिताम्[9] ॥ २४ ॥
प्रोज्ज्वलन्[10]मदनोन्मेषप्रस्फुरत्[11]जघनस्थलीम्[12] ।
शक्तिचक्रोच्छलद्[13]रश्मिवलनाकवलीकृताम्[14] ॥ २५ ॥

---

तद्दिङ्मुख इत्यर्थः । त्रिपुरीकृतविग्रहो मन्त्रन्यस्तशरीरः । त्रिपुराभट्टारिका[15]त्मना भावितात्मविग्रह इत्यर्थः । इदमेव मुख्यं समाधानम् । इदन्तोपासनं[16] काल्पनिकम् । तदुक्तं गीतानिष्यन्दे—

उत्सृज्या[17]त्म[18]समाधानं ये ध्यायन्त्यन्यदेवताः[19] ।
भिक्षन्ते[20] भूरिवित्तास्ते भिक्षित्वाऽपि बुभुक्षिताः ॥ इति ।

क्षोभिणी मुद्रा [1]वक्ष्यमाणा । नियोज्येति । दहनागारे अग्न्यागारे । चन्द्रसूर्यप्रभाकुले चन्द्रसूर्ययोः प्रभाभिर्व्याप्ते । अयमर्थः—[2]चन्द्रसूर्यदहनत्रिभङ्गिनि महति चक्र इति । विचलितापाङ्गीं कामविकारेण । प्रोज्ज्वलदिति[21] ।

---

दिङ्मुख इत्यर्थः । संयोज्य [2]दहनागार इति मूलाधारे तां साध्यां नियोजयेदित्यर्थः[22] । अथवा दहनागार इति चन्द्रसूर्यकलालयभूतं चक्रमेव । शक्तिचक्रोच्चलच्छवितवलनाकवलीकृतामिति

---

१. खीभूय–सघ. । २. विविच्य–सल. । ३. क्षोभिणो–से., मोक्षिणी–वाक. ख. । ४. मष्टोत्तरं–वाक. ख. । ५. संयोज्य–अ. । ६. कलालये–वाक. ख. ग. से. अ., कृतालया–सक., प्रभालये–सग. । ७. विह्वलिता–वाक. ख. ब. अ. । ८. पाङ्गां–सक. ख. घ. । ९. एतदनन्तरं पङ्क्तिक्रम एवम्—दूरीकृत., आकृष्ट., खप्र., प्रोज्ज्वल., शक्ति., नवानुराग.–से. । १०. प्रोच्छल–वाक. ख., प्रोच्चल–वाग. से., प्रचलो–सक., प्रोल्लस–सघ. । ११. प्रचल–वाक. ख., चल–सघ. । १२. स्थलाम्–वाक. अ. ब., मण्डिताम्–सघ. । १३. च्चल–वाक. से., च्चलच्छाक्ते–वाख. ग. घ. । १४. विकली–सख. । १५. रिकाभावि–ख. ड. । १६. इदमुपासनं–ख. ड., इदं तदुपासनं–घ. । १७. उज्झित्वा–म. । १८. ज्य स्वपमात्मानं–चि. । १९. देवताम्–चि. । २०. भिक्षन्ति–ख. ग. घ. ड., भिक्षित्वा–चि. । २१. 'प्रोज्ज्वलदिति' नास्ति–ख. ड. । २२. दिति भावः–ख. ड. ज. ।

1. तृतीये पटले ५-६ श्लोकयोर्वक्ष्यमाणेत्यर्थः ।
2. केचित्तु दहनागारशब्देन साधकस्य मूलाधारमुच्यते, तत्र योजनं साध्याया इत्याहुः । परे तु चन्द्रसूर्यकलायुक्ताग्निमण्डलं श्रीचक्रमेवेत्याहुः" ( से. पृ. ११४ ) ।

दूरीकृतस्वचारित्र[1]भयलज्जानयाङ्कुशाम्[2] ।
आकृष्टहृदयां नष्टधैर्यामुड्डीनजीविताम् ॥ २६ ॥
वप्र[5]प्रासादनिगड[6]नदीयन्त्रसुरक्षिताम्[7] ।
नवानुरागसन्धानकम्पमानहृदम्बुजाम् ॥ २७ ॥
मनोधिकमहामन्त्रपवनापहृतांशुकाम्[8][9][10] ।
विमूढामिव विक्षुब्धामिव[11] भ्रान्तामिव द्रुताम् ॥ २८ ॥

प्रोज्ज्वलताऽतिप्रज्वलितेन, प्रकर्षेणोज्ज्वलतो (वा) मदनस्य महोन्मेषेण प्रकृष्टस्फुरज्जघनस्थलीम्[12] । शक्तिचक्रेति । शक्तीना चक्र शक्तिचक्रम्, तस्मादुच्चलिताना रश्मीना वलना वेष्टनम्, तेन कवलीकृतां ग्रासीकृताम्[13] । दूरीकृतेति । चारित्र[14]भयलज्जानया एव, अङ्कुशः अपथप्रवृत्तिनिरोधक., स दूरीकृतः परित्यक्तो यया तामिति । आकृष्टहृदयां मन्त्रप्रभावरज्जुभि. । नष्टधैर्यां मन्त्रप्रभावाहृतगर्वत्वात् । उड्डीनजीवितां गतप्रायप्राणाम् । वप्रप्रासादेति । शिलेष्टका[15]मृत्संचितावरण वप्रम्[16] । प्रासादो भूभुजा स्थानम् । निगडं बन्धनम् । यन्त्रं भूगृहम् । तै. सुरक्षिताम्[17] । नवानुरागः प्रथम[18]राग , तस्य सन्धानेन कम्पमानहृदयाम्बुजाम्[19] । अत्राभियुक्तवचनम्—

[1]मूलाधारस्थदेवीमहाचक्रादुच्चलच्छक्तिवागुराकवलीकृतामित्यर्थः[20][21] । उड्डीनजीविताम्[22] उद्भ्रान्तजीवितामिति यावत् ॥ २०–२१ ॥

१. सु—सख. ग. । २. श्य—सख. ग । ३. मया—सक., लया—सख. ग. । ४. उत्तीर्ण—वाक. ख. । ५. चक्र—सख , यन्त्र—ब. । ६. प्राकार—वाक. ख. ब. सक. ख. ग. घ. । ७. निबिड—वाक. ख. ब. । ८. मूत—सक. । ९. तन्त्र—सख. । १०. वेगेना—वाक. ख. । ११. मिवाप्लुष्टामिव स्रुताम्—वाक. ख., सक्षुब्धा विप्लुष्टामिव विद्रुताम्—ब., क्ष्या घृष्टा मदनविह्वलाम्—सख., परिमूढामिव विल्पष्टा विघृष्टामिव विह्वलाम्—सग. । १२. स्थलामित्यर्थ —ग. । १३. 'ग्रासीकृताम्' नास्ति—ख ङ. । १४. 'चारित्र' नास्ति—ख ङ । १५. शिलालोष्ट—ख. ङ. । १६. वप्र —ग. घ. । १७. तामिति—ग. घ. । १८. 'प्रथमराग ' नास्ति—ख ग ङ । १९ वेपमानहृदयाम्—ख ङ. । २०. दुच्छल—क. ग. । २१. मिति यावत्—ख. । २२. 'उड्डीन यावत्' नास्ति—ख. ।

1 "शक्तिचक्र तदीयमूलाधारम्, तस्मादुच्चलन्त्या शक्त्या कुण्डलिन्या इति केचित्" ( से. पृ ११५ ) ।

लिखितामिव निस्संज्ञामिव[1] प्रमथितामपि ।
[2]दलितामिव संभ्रान्तामिवो[3]त्त्रासमितामिव ॥ २९ ॥
वि[4]ह्वस्तामिव संकीर्णा[5]मिवाकुलितमानसाम् ।
[6]निलीनामिव निश्चेष्टामिवान्यत्वं गतामिव ॥ ३० ॥
भ्रमन्म[7]न्त्रानिलो[8]द्धूतपत्राकारां नभस्[9]तले ।
भ्रमन्तीमानयेन्नारीं योजनानां श[10]तादपि ॥ ३१ ॥

---

न तथा सुखयत्येषा चेत[11]स्त्रिभुवनेशिता[12] ।
यथा परस्परानन्दी स्नेहः प्रथमरक्तयोः ॥ इति ।

मनोऽधिकेति। मनसो योऽधिको वेगः, मनोजव इति यावत्। स महामन्त्रपवनस्तेनापहृतांशुकाम्। विमूढाम् अनभिव्यक्तात्मस्वभावाम्। विक्षुब्धाम् आविलमानसाम्। श्रान्ताम् अ[13]प्रत्यभिज्ञातस्वरूपत्वाच्चिरं खिन्नाम्। द्रुतां द्रवीभूताम्। लिखितां चित्रस्थि[14]ताम्। निस्संज्ञां मूर्च्छां गताम्। प्रम[15]थितां विलोलिताम्। विहस्तां प[16]रवशाम्। संकीर्णां[17] प्रतिपत्तिरहिता[18] विकीर्णा[19]वयवाम्। आकुलितमानसां प्र[20]स्तुतविस्मृतमानसाम्। निलीनामिव निश्चेष्टामिवान्यत्वं गतामिवेति[21]। निलीनाम्[22] अनुद्योगाम्। निश्चेष्टां[23] मृतप्रायाम्। अन्यत्वं गता, नेयं सा, अन्यैवेयमिति द्रष्टृभिश्चिन्त्यमानाम्। भ्रमन्निति। भ्रमन् परि[24]भ्रमन्, मन्त्र एवानिलो मन्त्रानिलः[25], [26]तेनोद्धूतस्य उत्कम्पितस्य

---

१. मति—ख. । २. "दलितामिव शलीनामिवाकुलितमानसाम् । सलिलामिव संभिन्नामिवाकुलितविग्रहाम् ॥ एवं मन्त्रानिलोद्भ्रान्तपत्राकारा नभस्तले ।" इति क्रम पाठश्च—ख., गलिता—वाग. से. । ३. वोद्गमरिता—वाग. से. ब. सस. । ४. गलिता—वाक. ख., दलिता—सव., मलिना—ब. । ५. संभिन्ना—भाव. ख । ६ नास्त्येषा पङ्क्तिः—वाक. ख. ग. ब. अ. । ७. मह्रा—वाग. से. सस. । ८. दुभ्रान्त—वाक. ए. अ., दुमूतपत्रा—वाग. से. । ९. स्थले—वाग. से. सस. । १०. शतैरपि—वाग. से. । ११. चारित्रि—ग । १२. शितुः—स. ङ. । १३. प्रत्यभिज्ञातस्वरूपा च—च ङ. । १४. स्थाम्—ग. घ. । १५. अप्रम—ग. घ. । १६. विप्रतिपत्तिरहिताम्—ख. ङ. । १७. सशीर्णा—ग. घ. ङ. । १८. 'प्रतिपत्तिरहिता' नास्ति—ख. ङ. । १९. विशीर्णा—ख. ग. ङ. । २०. 'प्रस्तुतविस्मृतमानसाम्' नास्ति—ख. ङ. । २१. 'इति' नास्ति—ग. । २२. नामिव—ग. । २३. निश्चेष्टा नाम मृतप्राया—ग. । २४. 'परिभ्रमन्' नास्ति—ख. ङ. । २५. 'उद्धूतपत्राकारा' इत्यधिकं—ग. । २६. 'तेन' नास्ति—घ. ।

**अथवा मातृकां सर्वां लिखित्वा चक्रबाह्यतः ।**
**धारयेद् बाहुमूले येस्त्ववध्यः सर्वजन्तुषु ॥ ३२ ॥**

---

पत्रस्य पर्णस्याकार इव या कम्पते ताम् । अत्र[2] नभस्तल इत्यस्याय भाव — मन्त्रपवनप्र[3]कम्पिता निरालम्बना भ्रमन्तीमिति। आनयेत्, साधक इति शेष.। योजनानां शतादर्पीत्यस्मिन्नर्थे मन्त्रो[4]ऽर्थमाथर्वण [1]—"यदि वसति[5] योजनशते नदीना वा ग[6]तान्तरः" इति ॥ २०-३१ ॥

अथवेति निपातसमुदायोऽयशब्दार्थ. प्रयोगान्तरारम्भे । अयमर्थ[10].— च[7]क्रस्य बाह्यदेशे चक्रोपरिलि[8]प्टमकारादिक्षकारान्तान् वर्णान् विन्यस्य प्रोक्त-क्र[9]ममावध्य प्रोक्तस्थाने प्रोक्तफलसिद्ध्यै धारयेदिति ॥ ३२ ॥

---

अथवेत्यादि सर्वजन्तुष्वित्यन्तस्यायमर्थः—[2]भूर्जपत्रे चन्दनागुरुकर्पूरपङ्केन श्रीचक्रं लिखित्वा तस्य म[11]ध्ये त्रिकोणमध्ये लिखितमूलविद्याहकारमध्येऽमुकं र[12]क्ष रक्षेति साधक-नाम लिखित्वा चक्रचतुरस्रबाह्य[13]तः परिवेषक्रमेण मातृकां लिखित्वा सितसूत्रेण वेष्टयित्वा गुटिकां कृत्वा पञ्चगव्यपञ्चामृतस्नापनान्ते प्राणान् प्रतिष्ठाप्य संपूज्य मूलविद्यामष्टो-त्तरशतादि स्मरन् यथाशक्ति जपि[14]त्वा शुभेऽहनि धारयेत् ।

---

१. य. सोऽवध्य—वाल. से. व. सक. ग., शु सोऽवध्य—मस.। २. 'अत्र' नास्ति—ख. ङ., 'अत्र…इति शेष' नास्ति—घ.। ३. म्पिता…म्बना…तीति—ख.। ४. मन्त्रो यथा दर्पण—ख. ङ.। ५. वसन्ती—ग.। ६. गतान्तर—ग. घ.। ७. 'चक्रस्य' नास्ति—ख. ङ.। ८. लिप्ट—ग., रिप्ट—घ.। ९. माबाध्य—घ., कर्माबध्य—ख. ङ.। १०. 'अथवे…अर्थ' नास्ति—ग.। ११. 'मध्ये' नास्ति—ख. ङ. ज.। १२. 'रक्ष' नास्ति—ख. ग. छ.। १३. इतः परम्—"प्राणप्रतिष्ठा। प्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषय ऋग्यजुस्सामाथर्वणानि छन्दांसि सकलजगत्सृष्टिस्थितिसंहारकारिणी परा प्राणशक्तिर्देवता आं ह्रीं क्रों बीज स्वाहा शक्तिः प्राणप्रतिष्ठार्थे विनियोग । रक्ताब्धिपोतारुणपद्मसंस्था पाशाङ्कुशाविक्षुशरान् सबाणान् । शूल कपाल दधतीं कराग्रे रक्ता त्रिणेत्रा प्रणमामि देवीम् ॥ इति। तत्र" इत्यधिक पाठ—क. ग. छ.। १४. जप्त्वा—ख. ङ.।

1. एतद्वचनमथर्ववेदे न दृश्यते। श्रीकण्ठ्यां पठितेषु चतुष्षष्टितन्त्रेष्वेका आथर्वणसंहिता। तत्र यमेतद्वचनं स्यात्।
2. "अत्र नामलेखनादीनिकर्तव्यताविस्तरो ग्रन्थविस्तरैकप्रयोजनकोऽर्थरत्नावल्यां द्रष्टव्य" ( मे. पृ. ११५ )।

---

अत्र प्राणप्रतिष्ठाप्रकारो लिख्यते—दीर्घषट्स्वरभेदितेन मायाबीजेन कराङ्गन्यासं कृत्वा पाशाङ्कुशाभयवरोद्यतकरां रक्तालङ्कारवसनां प्राणदूतीपरिवृतां रक्तां शक्तिमात्मानं ध्यात्वा मूलाधारान्मूलशक्तिमुत्थाप्य प्रवहणनाड्या निस्सार्य साध्यवामनाड्या तस्य भ्रूमध्यं भित्वा सुषुम्नापथेन[1] हृत्कमलं प्रवेशयित्वा[2] तद्गताष्टपत्रकर्णिकायां निषण्णान् भ्रमराकृतीन् साध्यप्राणान् शक्तितन्तुप्रविद्धान्[3] स्वप्राणदूतीभिराकृष्याकृष्य गुलिकायां संस्थाप्य प्राणप्रतिष्ठामनु जपित्वा स्वात्मशक्तिं स्वात्मनि[4] समाहरेत्। प्राणदूत्यो यथा—

मृता वैवस्वता चैव जीवहा प्राणहा तथा।
आकृष्या प्रथना[5] चैव[6] प्रमादा विस्फुलिङ्गिनी॥
क्षेत्रज्ञ[7]प्रतिहारी च प्राणदूत्यो[8] नव स्मृताः। ( प्र० सा० ३५।१२ )

[9]ओँ ह्रीँ क्रोँ यं र लं वं शं षं सं हं ळं क्षं सं हं सः[10] अमुष्य प्राणा इह प्राणाः। पुनरपि पाशादि हंसोन्तम्[11] अमुष्य जीव इह स्थितः। पुनः पाशादि हंसान्तम् अमुष्य सर्वेन्द्रियाणि। पुनः पाशादि हंसान्तम् अमुष्य वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा मयि जीव इह स्थितो मयि सर्वेन्द्रियाणि मयि वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहायान्तु सुखं चिरं तिष्ठन्तु स्वाहा। प्राणप्रतिष्ठामन्त्रः। अथवा स्त्रीसाध्य[12] आत्मानं कामेश्वरं ध्यात्वैवं कुर्यात्[13]। पुंसाध्ये कामेश्वरीं[14] ध्यात्वैवं[15] कुर्यादिति। आकृष्ट्यादिषट्कर्मसु भ्रमरप्रयोगपूर्वकं[16] साध्यप्राणान् प्रतिष्ठाप्य स्पृशन् अष्टोत्तरशतादिक्रमेण यथाशक्ति जपेत्। स्वपरार्थ[17]रक्षासु सर्वत्र गुटिकां स्पृशन् भ्रमरप्रयोगं विना तत्तद्देवतासन्निधानार्थं तत्तद्देवतानामपूर्वकं प्राणप्रतिष्ठामन्त्रं यथाशक्ति जपेत्। नवनीतघृतादिष्वात्मोपभोग्यवस्तुष्वा[18]कर्षणवशीकरणविविध[19]प्रयोगेषु भ्रमरप्रयोगपूर्वकं साध्यप्राणान् प्रतिष्ठाप्य सहस्रादिक्रमेण स्पृशन् प्राणप्रतिष्ठामन्त्रं जपित्वा प्रयुञ्ज्यात्। ततोऽभीष्टसिद्धिर्भवति॥ ३२॥

---

१. पदेन—ङ. ज.। २. भेदयित्वा—ख.। ३. तनुप्रविष्टान्—क, मार्गप्रविष्टान् प्राण—ख. ङ. ज.। ४. स्वस्थाने—ख. ङ. ज.। ५. प्रसना—ख. घ. ङ. ज.। ६. पश्चात् प्रथमा—ख. ङ. ज.। ७. क्षेत्रप्रतिहृतेत्येता—ख. घ. ङ. ज.। क्षेत्रजा प्रतिहारी च—छ.। ८. दूत्यश्च यादिका—मु.। ९. 'ओं ह्रीं······प्रतिष्ठामन्त्र' इत्यस्य स्थाने 'ओं ह्रीं क्रों इत्यादि प्राणप्रतिष्ठामन्त्र' इत्येव पाठ—ख. ङ. ज.। १०. हस. सोह—ग.। ११. सोहमन्तम्—छ.। १२. ध्यात्वे—ख. ङ. ज.। १३. त्वेतत्—क. ग. ङ. छ.। १४. कामेश्वरोरूप—क. ग. छ.। १५. ध्यायेदिति—क. ग. ङ. छ. ज.। १६. कान्—ख. ङ. ज.। १७. स्वपरमात्म—ख. ङ. ज.। १८. 'ष्वात्मो···भंवति' इत्यस्य स्थाने 'ष्वात्मप्रयोगवस्तुषु भक्षणवशीकरणप्रयोगे सभ्रमरसप्राणं जपं युञ्ज्यात्' इति पाठ—ज.। १९. विविध··भंवति' इत्यस्य स्थाने 'प्रयोग' सभ्रमरसप्राण जप्त्वोपयुञ्ज्यात्' इत्येव पाठ.—ख. ङ.।

[1]तथैव हि महेशानि स्वसंज्ञाक्रमयोगतः ।
चन्दनागुरुकर्पूरैरजरामरतां लभेत्[2] ॥ ३३ ॥
[3]एवं देवि विधानेन रोच[4]नागुरुकुङ्कुमैः ।
लिखितं [5]चक्रयोगेन यस्मिन् क[6]स्मिन्नपि स्थितम् ॥ ३४ ॥
साध्यनाम स्वनाम्ना तु चक्रस्यान्तर्विदर्भितम् ।
करोति [7]सकलान् लोकानचिरात् पादवर्ति[8]नः ॥ ३५ ॥

---

तथैव पूर्ववत् । समातृकाव[9]र्णं चक्र विलिख्य स्वसंज्ञाक्रमयोगतः स्वस्य साधकस्य सज्ञाक्षरमन्त्राक्षरक्रमयोगत इत्यर्थ ॥ ३३ ॥

चक्रयोगेन [10]चक्रविन्यासयोगेन । यस्मिन् कस्मिन्निति[11] । देश इति पूर्यम् । चक्रस्यान्तर्विदर्भितमित्यस्यायमर्थ.—चक्रस्य मध्ये सकामराजवीजे साध्यसाधकनामाक्षराणा यथायोग विदर्भेण स्थितमि[12]दं चक्रमिति । लोकान् जनान् । पादवर्तिनः [13]पादस्थानीयान् ॥ ३४-३५ ॥

---

तथैवेत्यारभ्य अमरता लभेदित्यन्तस्यायमर्थ – स्वसज्ञाक्रमयोगत इति पूर्ववच्चक्र लिखित्वा चक्राद्बहितो मातृकालेखनसमये प्रत्यक्षरं [14]साधकनामाद्यक्षरान्तरितं लिखेदिति विशेष ॥ ३३ ॥

एव देवीत्यारभ्य पादवर्तिन इत्यन्तेनैतदभिप्रेत[15]म्—एवमिति पूर्ववच्चक्रले[16]खनमुक्त सूचितम् । अत्रायं विशेष —मूलवि[17]द्याहकाररेफयोर्मध्ये साध्यसाधकयोर्विदर्भितं नाम लिखित्वा तत्रैव कर्म लिखेत् । तत्रापि [18]साधकस्य नामाक्षरद्वय [19]साध्यना( म ? म्न ) एकैकमिति विशेषः । व[20]श्यकर्मण प्रस्तुतत्वाल्लेखनद्रव्यविशेषोऽप्युक्त । मातृकाक्षरवेष्टनं साधकनामाद्यक्षरयोगेन । ( एव ? एव ) विदर्भविधि. । साध्यसाधकनामविलेखने सर्वत्रायमेव विधि. ॥ ३४-३५ ॥

१ तथैव–वाख. । २. प्रजेन्–वाग. रो. । ३. एतदेव–वाक. ग. रो. । ४. चन्दना–ख. । ५. क्रम–ख. । ६. तस्मिन्–वाक. ख. । ७. सकल लोकम–वाक. ख. । ८. नम्–वाक. ख. । ९ वर्णि–घ. । १०. चक्रविन्यासयोगेन–ग. । ११ 'इति' नास्ति–ख. ङ. । १२. 'इद' नास्ति–ख. ग. ङ. । १३. दास–ग. घ. । १४. साध्य–ङ. । १५. मतम्–ङ. ज. । १६. लेखमुक्त सचितस्य–ङ. । १७. विद्यायो–ग. ज. । १८. कनामा–ङ. ज. । १९ साध्या–ङ. । २०. वश्यस्य–ङ. ज ।

मध्यंगतेन बीजेन महाकामकलात्मना ।
एकमेकमवष्टभ्य[2] साध्यनामाक्षरं प्रिये ॥ ३६ ॥
बहिरप्यखिलैरेवं[3] वेष्टयेन्मातृकाक्षरैः ।
हेममध्यगतं[4] कृत्वा धारयेद् वामके भुजे ॥ ३७ ॥
शिखायामथवाऽस्यादौ[5] धारयेद्यत्र तत्र वा ।
करोति दासभूतं तत्त्रैलोक्यं[6] सचराचरम्[7] ॥ ३८ ॥

मध्यंगतेन चक्रमध्यत्रिकोणगतेन । [1]महाकामकलात्मना "बिन्दुं संकल्प्य" ( १।१८५ ) इत्युक्तस्वभावेन ईकारात्मना । अवष्टभ्य आत्मीकृत्य । बहिः चक्रात् । हेममध्यगतं[8] हेमपट्टमध्यगतम् । चक्रमिति शेषः । शिखायां चूलीतले । अथवाऽस्यादौ धारयेद् यत्र तत्र वेति । अस्यादौ[9] खड्गादौ । यत्र[10] तत्र वेति । महानसकोशगृहादिदेश इत्यर्थः । करोति दासभूतं तत्त्रैलोक्यं

मध्यंगतेनेत्यादि चक्रुरूपिणीत्यन्तेनैतदभिप्रेतम्—[1]मूलविद्यामध्यगतमहाकामराजबीजानन्तरं साध्यनामाद्यक्षरं[11] पुनः कामराजबीजं तदन्ते साध्यनामद्वितीयाक्षरम् । एवं क्रमेण यावन्नामपरिसमाप्त्यवष्टभ्य तन्महाचक्रमध्यत्रिकोणे सर्वमेतल्लिखित्वा तत्रैव त्रिकोणान्तरे[12] मातृकया वेष्टयेत् । अत्रावष्टम्भशब्देन ग्रथनमभिप्रेतम्[13] । तदुक्तम्—

१. त्मनः–सक. । २. मेव–सख. । ३. रेवं–सग., लिखेदेवं–सङ. । ४. गतां–चार. ग. । ५. यस्त्रे–वाक. ख. ग. से. ब. अ. सक. ख. ग. घ. । ६. हि–वाक. ख. ग. से. अ. ब. सक. ख. ग. घ. । ७. नास्त्येषा पङ्क्तिः–सख. । ८. 'हेममध्यगतं हेमपट्टमध्यगतम्' नास्ति–ख. ङ. । ९. 'अस्यादौ' नास्ति–ख. ङ. । १०. 'यत्र तत्र वेति' नास्ति–ख. ङ. । ११. नामाक्षरं–ख. ङ. ज. । १२. णान्तराले मातृकां वे–ख. ङ. ज. । १३. हितम्–क. ग. छ., मतम्–ख. ज. ।

1. "महाकामकलात्मकं बीजं चतुर्थस्वरस्तेन मध्यंगतेन त्रिकोणान्तर्लिखितेन साध्यनामाक्षरमेकमवष्टभ्य संपुटीकृत्य बहिश्चकार्याग्निवयोनिचक्राद् बहिर्मातृकाभिर्वेष्टयेदिति तु विमर्शिन्यां व्याख्यातम् । रत्नावलीकारस्तु मध्यंगतेन मूलविद्यामध्यस्थेन बीजेन कामराजकूटेन साध्यनामाक्षराणि ग्रथयित्वा त्रिकोणान्तर्विलिख्य बहिः कामकूटाद्बहिस्त्रिकोणमध्य एव मातृकाभिः साध्यनामाक्षरग्रथनरीत्यैव वेष्टयेदिति व्याचख्यौ" ( से. पृ. ११६ ) ।

संमोहयति राजानं वाजिनं दुष्टकुञ्जरम् ।
[2]चौरं केसरिणं स[3]र्पं [4]परतन्त्रं महाबलम् ॥ ३९ ॥
[5]शत्रुं वज्राशनिं शस्त्रं [6]डाकिनीं शाकिनीं तथा ।
[7]भूतप्रेतपिशाचांश्च धारिता चक्ररूपिणी ॥ ४० ॥
तेन [8]क्रमेण संदर्भ्य पुराणां नाम सुन्दरि ।
मध्ये चतुष्पथे [10]वापि चतुर्दिक्षु निधापयेत् ॥ ४१ ॥

[1]सचराचरमित्यत्र तच्छब्दश्[11]चक्र परामृशति । परतन्त्रं परसैन्यम् । महाबलमिति तन्त्रविशेषणम् । वज्राशनिमिति । [2]'वर्ज्यं वर्जनात्[12]' । यत्र पतति तद्वर्जयतीति । [13]तादृशीमशनिमित्यर्थः । धारिता चक्ररूपिणीति । देवेति शेषः ॥ ३६–४० ॥

तेन क्रमेण पूर्वोक्तप्रकारेण । सन्दर्भ्य ग्रथयित्वा । पुराणां प्रसिद्धानां नगरीणाम् । [14]नाम संज्ञा । मध्ये पुराणाम् । चतुष्पथे रथ्याचतुष्टयसन्धौ ।

---

"मथनं चाक्षरं प्रति"[3] इति । [15]तत्रापि [16]मातृकावे[17]ष्ट(ने ? नं) सार्ध[18]कनामाद्यक्ष[19]रैर्योगेनैव कार्यम् ॥ ३६–४० ॥

तेन क्रमेणेत्यादि ईश्वरीत्यन्तेनैतदभिप्रे[20]तम्—तत्रापि मध्यमबीजेन पुन[21]र्नामा-

---

१. देवेशि–सक. । २. चक्र–वाग. । ३. सर्वं–से. । ४. परमन्त्रमहाग्रहम्–वाक. ख. ग., परचक्र–वाग. से., परमन्त्र–सख. ग. । ५. शत्रून्–से., शक्र–सख., शक्ति–सग. । ६. वेताल राक्षस–वाग. से., शाकिनीं राक्षसीं–च. सक. ख. ग. । ७. प्रेतभूत–सख. । ८. चक्रेण–वाक. ख. । ९. सदध्यात्–सख. । १० चापि–से., देवि–सख. । ११. श्चक्रराज–ग. । १२. पर्जन्यात्–ख. । १३. तादृशा–ख. ङ. । १४. 'नाम संज्ञा । मध्ये पुराणाम्' नास्ति–ख. ङ. । १५. अत्रापि–ख. ज. । १६. मातृकया–ग. छ. । १७. नेऽपि–ख. ङ. ज. । १८. साध्य–क. ग. छ. । १९. क्षरं–ङ. । २०. मतम्–ङ. ज. । २१. त्रिपुरा नामा–क. ख. ग. घ. ङ. ज. ।

1. "सचराचरमित्यत्र तच्छब्दश्चक्र परामृशतीति विमर्शिन्यामुक्त तदयुक्तमिति" ( से. पृ. ११७ ) । अत्रेदमवधेयम्—सेतुबन्धे 'करोति दासभूतं हि' इति पाठ, ऋजुविमर्शिन्यां तु 'करोति दासभूतं तत्' इति ।
2. "वर्जयति वियोजयति प्राणैः" ( ३।११।४ ) इति निरुक्तव्याख्यायां दुर्गाचार्यः ।
3. १५० पृष्ठस्या २ संख्याका टिप्पणी द्रष्टव्या ।

महान्[1] कोलाहलस्तत्र ततो लोकस्य जायते ।
योषितां च[2] विशेषेण विद्विष्टा[3]नाम[4]पीश्वरि ॥ ४२ ॥
एतन्मध्यगतां पृथ्वीं सशैलवनकाननाम् ।
चतुःसमुद्रपर्यन्तां ज्वलन्तीं चापि चिन्तयेत्[5] ॥ ४३ ॥
[6]षण्मासध्यानयोगेन[7] जायते मदनो[8]ऽपरः ।
[9]दृष्ट्यैवाकर्षयेल्लोकं[10] दृष्ट्यैव कुरुते वशम्[11] ॥ ४४ ॥
दृष्ट्या क्षोभयते[12] नारीं दृष्ट्या[13] संहरते विषम् ।

---

चतुर्दिक्षु पुराणां चतुराशासु । निधापयेत् निखानयेत्[14] । महान् अनल्पः । कोलाहलः क्षोभात्मा । तत्र तासु पुरीषु । लोकस्य जनस्य । तत्रत्यानां जनानां परस्परक्षोभो भवतीति भावः । विद्विष्टानां परस्परं कृतवैराणाम् ॥ ४१–४२ ॥

एतन्मध्यगतामित्यत्रैतच्छब्दश्चक्र[15]राजपरामर्शकः । वनं जलम् । ज्वलन्तीं चक्रप्रभाक[16]वलितत्वात् । मदनः कामः । अपरो द्वितीयः । दृष्ट्या करोति

---

क्षरमथनं कार्यमिति विशेषः । अन्यन्मातृकावेष्टनादि समानमिति । सन्दर्भावष्टम्भा-[17]वेकौर्थावित्ति ॥ ४१-४२ ॥

एतदित्यादि नाशयते क्षणादित्यन्तः स्पष्टार्थः । तत्राप्येतदिति श्रीचक्रमभिमतम् ॥ ४३–४६ ॥

---

१. महाहल्लोहलो देवि–वाक. ए., महाकोलाहलस्तत्र–सख. ग., स्तेषु–सक. । २. तु–सख., वा–सग. । ३. त्यदृष्टा–वाक. ख. घ. अ. । ४. नां महे–सप. । ५. चिन्तयेत् प्रिये–वाग. से., चिन्तयेत्ततः–घ. सक. ख. ग. । ६. षण्मासान्–वाग. से. । ७. काल–सग. । ८. नोपमः–वाक. ख. घ. अ. । ९. श्लोकद्वये सर्वत्र 'दृष्ट्वा' इति पाठ–वाग. से., दृष्ट्याकर्षयते–घ., दृष्ट्वा कर्षयते–सख., दृष्ट्वा आक–सग. । १०. लोकान्–वाग. से. सक. । ११. वशे–वाग. से. । १२. संक्षोभयेन्नारीं–वाग. से. सक. ग. । १३. दृष्ट्वैवापहरेद्विषम्–वाग. से., दृष्ट्यापहरते विषम्–घ. सक. ग., दृष्ट्वा–सख. । १४. 'निखानयेत्' नास्ति–ख. ट. । १५. श्चक्रं परामृशति–ख. ट. । १६. कवलीकृतत्वात्–ख. ट. । १७. वेय कार्यावित्ति–क. ख. ग. ट. छ. ।

दृष्ट्या करोति [1]वागीशं दृष्ट्या [2]सर्वं विमोहयेत् ॥ ४५ ॥
दृष्ट्या करोति चावेशं दृष्ट्या सर्वं विमोचयेत् ।
दृष्ट्या [3]चातुर्थिकादींश्च [4]नाशयेदचिराज्ज्वरान् ॥ ४६ ॥
एतत्प्रपूजितं [5]रात्रौ [6]चक्रं सिन्दूरचित्रितम् ।
करोति [7]महदाकर्षं [8]सुदूरादपि योषिताम् ॥ ४७ ॥
[9]सर्वदिक्षु विदिक्ष्वेवं [10]यदा देवी [11]प्रपूज्यते ।
दिगनुक्रमयोगेन तदा सर्वं जगद्वशे ॥ ४८ ॥

---

वागीशमिति । मूकमपि जनमनुग्रहदृष्टिपातेन सरस्वतीनृत्त[12]गीतरङ्गं करोतीत्यर्थः ॥ ४३–४६ ॥

[13]एतदित्यादि । [1]सिन्दूरचित्रितं रात्रौ प्रपूजितं महदेतच्चक्रं सुदूरादपि योषितामाकर्षं करोतीत्यन्वय । तदा सर्वं जगद् वशे । भवतीति शेष ॥ ४७–४८ ॥

---

एतदित्यादि सुदूरादपि योषितामित्यन्तेन [1]सिन्दूररजसा श्री[14]चक्रं लिखित्वा [15]तन्म-(ध्य?ध्ये) त्रिकोणमध्ये (प्रथ)मं मूलवि(द्या ? द्या) तत' संबोधनान्तं देवीनाम पुनर्लिखि-[16]त्वाऽर्थादेतन्मध्ये आकर्षणकर्मवत् [17]सर्वं नामादिक लिखित्वा रात्रौ पूजयेदित्यभि-मतम् ॥ ४७ ॥

१. चावेशं–वाक. ख. ग. । २. सर्वं विमोचयेत्–वाग. से. सर्वं विमोहयेत्–घ. । ३. दर्पकाहि–सग. । ४. द्विपमज्वरान्–वाग. से. साग. ज्वराञ्चाशयते क्षणात्–अ. घ. सक. ख. । ५. देवि–घ. सत्र., चक्र–सख. । ६. सिन्दूरेण विचिन्तितम्–वाक. ख., चक्र सिन्दूररञ्जितम्–वाग. से., निशि सिन्दूरचित्रितम्–घ. सग., चर्चितम्–सक., चक्र सिन्दूरचर्चितम्–सग. । ७. स महाकर्षं–सग. । ८. दूरस्थायाश्च योषित –सख., सुदूरादेव–सग. । ९. सदा–वाग. ख. से. घ. साग., एतद्–सक. । १०. यथा देवि–वाक. ख., यदा देवी–सख. । ११. जयेत्–सग. । १२. 'गीत' नास्ति–ग. घ. । १३. एतदिति–ख. घ. ङ. । १४. इत परम्–'ग्रम्य हरिद्रादि तेन चक्र' इत्यधिक पाठ –च. ग. छ., ५८ श्लोकस्यमेतद्व्याख्यानमत्रयधानादत्र स्थापितम् । १५. 'तन्मध्ये · र्थादि' नास्ति–ख. ङ. ज. । १६. र्थादित–क. ख. ग. घ. ङ. ज. । १७. सर्वनामादि–क. ग. छ. ।

1 'तेन हरिद्रादिना विलिख्य सिन्दूर पूरयेदिति व्याख्यानमनादेयम्" ( से. पृ. ११८ ) ।

भूर्जपत्रे विलिख्यै[1]तन्नवे निर्विवरोदरे ।
रोचनागुरु[2]काश्मीरैर्मध्ये संदर्भयेत् पुरम् ॥ ४९ ॥
विपुलं देशमथवा विषयं[3] मण्डलं तदा[4] ।
स्वनामसहितं[5] कृत्वा यदि भूमौ निधापयेत् ॥ ५० ॥
धारयेदथवा[6] हस्ते कण्ठे[7] वा भुजमूलतः[8] ।
शिखायामथवा[9] वस्त्रे यत्र यत्र स्थितं च वा[10] ॥ ५१ ॥
चक्रमेतन्महाभागे[11] पुरक्षोभणमुत्तमम्[12] ।

भूर्जेति । एतत् चक्रं । नवे नूतने । निर्विवरोदरे अच्छिद्रे । काश्मीरं कुङ्कुमम् । मध्ये चक्रस्य । संदर्भयेत् पुरमिति । पुरादीनां नामाक्षराणि यथा संदर्भितानि ग्रथितानि भवन्ति तथेति । स्वनामसहितं साधकसंज्ञाक्षर-संयुक्तम् । अयमर्थः—चक्रराजमध्ये[13] त्रिकोणोदरलिखित[14]कामराजबीज[15]गर्भ[16]-गृहे पुरादीनां नामाक्षराणि साधकनामाक्षरैः[17] संदर्भितानि लिखेदिति । पुरक्षोभणं पुराणां[18] क्षोभणमित्यर्थः ॥ ४९-५२ ॥

---

सर्वेत्यादि जगद्वश इत्यन्तेन श्रीचक्रमध्ये साध्यसाधकयोर्नाम वशीकरणवह्निलिखित्वा पूर्वादिक्रमेणै[19]वाभिमुखः पूजयेत् । अत्र[20] साध्यनाम[21][1] दिङ्नामैवेति सूचितम् ॥४८॥

भूर्जपत्र इत्यादि उत्तममित्यन्तेनैतदभिप्रेतम्[22]—श्रीचक्रमध्ये त्रिकोणमध्यलिखित-विद्यारेफहकारमध्ये पुरादिना(म) साधकनामाक्षरप्रथनयोगेन लिखित्वा कर्म लिखे-दिति यावत् ॥ ४९-५२ ॥

---

१. समालिख्य रोचनागुरुकुङ्कुमैः–याक. ख. अ. व., त्रेषु संलिख्य–सग. । २. संदर्भयेत्तस्य मध्ये नगरं यायवा पुरम्–याक. ख. सक. ग. । ३. विपुले–सक. । ४. च वा–याक. ख., तथा–याग. से. ब. सक. । ५. दर्भित–याक. ख. । ६. ज्वालके–सक. । ७. केयूरे वा शिलापके–सक. । ८. बाहु–याग. से. सग. । ९. बाहुमूलेऽ–सक. । १०. वा रोचयेन्मनः–सक. । ११. देवि–सल. ग. । १२. हेतुकम्–सग. ग. । १३. मध्य–ख. घ. ङ । १४. विलसित–ख. ङ., 'लिखित' नास्ति–ग. । १५. 'बीज' नास्ति–ख. ङ. । १६. 'गर्भ' नास्ति–घ. । १७. साधकानां नाम–ग. । १८. 'पुराणां क्षोभणमित्यर्थः' नास्ति–ख. ङ. । १९. क्रमेण पूर्वाभि–ङ, क्रमेणाभि–ज. । २०. तत्र–ङ. ज. । २१. नामादिना–ख. ङ. ज. । २२. मतम्–क. ग. छ. ।

1. "अत्र दिङ्नामैव साध्यनामेत्याहुः" ( से. पृ. ११८ ) ।

अर्कक्षीरं कुङ्कुमं[1] च धत्तूरकरसं तथा ॥ ५२ ॥
रोचनालक्तकं लाक्षारसं मृगमदोत्कटम्[2] ।
एकीकृत्य[3] चक्रमेतल्लिख्यते[4] यस्य संज्ञया ॥ ५३ ॥
तस्य चोरग्रहव्याधिरिपुसिंहाहिर्वारिजम्[5][6][7][8] ।
यक्षराक्षसवेतालभूतप्रेताशुभात्मनाम्[9] ॥ ५४ ॥
लूतावृश्चिककीटानां कामलाशीतिकोद्भवम्[10] ।
भयं न विद्यते[11] तस्य[12] परमन्त्राभिचारजम्[13][14] ॥ ५५ ॥

अर्कक्षीरमित्यादि । धत्तूरकरसम् उन्मत्तपुष्परसम् । अलक्तकलाक्षयोरवान्तरभेदो द्रष्टव्य. । मृगमदोत्कटम्[15] । मृगमदः कस्तूरिका, तयोत्कटम् उद्रिक्तम् । संज्ञया नाम्ना । ग्रहः सूर्यादि. । व्याधिः आध्यात्मिकादिदु.खत्रयात्मा । वारिजं जलनिमित्तज भयम् । यक्षराक्षसवेतालभूतप्रेताशुभात्मनामिति । यक्षादिप्रेतान्ताना पञ्चानामन्येपामशुभात्मनामपीत्यर्थः[16] । लूतेत्यादि[17] । लूतादिकीटान्ताना त्रयाणा संबन्धि भयम्, कामलोद्भव भयं शीतिकोद्भवं[18] भयं चेत्यर्थ. । तस्य साधकस्य । परमन्त्राभिचारजं भयमित्यस्यायमर्थ. —परेषा

---

अर्कक्षीरेत्यादि सर्वेत्यन्तप्रयोगे रक्षाकर्मवन्नामकर्म[19] लिखेत् ॥ ५२–५६ ॥

---

१. कुसुम–सख. । २. तमम्–व. । ३. कृत्वा–से. व. सक. ख. । ४. क्रमेणैत–व. । ५. वित–सक. । ६. दिव–मध., विप्र–सग. । ७. हिंसानिवारणम्–सक., हिंसाभिचारजम्–सग. । ८. वाजिजम्–वाध. से., वाजिनाम्–वाक. ग. । ९. मूतोग्रशाकिनीदुष्टचेतसाम्–वाक. ख., भूतप्रेतपिशाचजम्–वाग. से., हिंसाभिचारजम्–सख. । १०. लूतादिगर्दभज्वाला तथा शीतलिकोद्भवम्–वाक. ख., ज्वालागर्दभलूतादि–व. सग., लूतागर्दभविस्फोटज्वाला–शक., मूतादिशमरोद्भूत–सख. । ११. पीडयते–सक. । १२. वश्य–सक. । १३. तन्त्रा–सग. । १४. चम्–शाक. ख., रिकम्–व. । १५. 'मृगमदोत्कटम्' नास्ति–ख. ङ. । १६. अनेषामनु–ख. ङ. । १७. लूतादीति–घ., नास्ति–ख. ङ. । १८. 'शीतिकोद्भव भय' नास्ति–ख. ङ. । १९. कर्मसंलिखेत्–ट. अ., कर्मलेखनम्–व. ग. छ. ।

**नित्य[1]सन्धारणाच्[2]चापि कालमृत्युयमादयः ।**
**न शक्ता हिंसितुं सम्यग् रो[3]मैकमपि सर्वदा[4] ॥ ५६ ॥**
**अ[5]थवा म[6]ध्यगां देवीं त्रिकोणोद[7]रगां तथा ।**
**अधस्तान्नामसंयुक्तां रोचनाकुङ्कुमाङ्कि[8]ताम् ॥ ५७ ॥**
**कु[9]र्याद्यस्तु च सप्ताहाद्[10] दासवत् किङ्करो भवेत् ।**

[11]शत्रूणां संवन्धि मन्त्रसाधिताभिचा[12]रजं भयमिति[13] । नित्यसंधारणात् [14]चक्रराजस्य ॥ ५२–५६ ॥

अथवेति । मध्यगां महाच[15]क्रमध्यशक्तिमध्यस्थानगताम् । देवीं मन्त्ररूपिणीम् । [1][16]त्रिकोणोदरगां कोणत्रयोदरगताम् । [2]तथा य[17]था मध्ये त[18]था कोणत्रयेष्वे[19]पीत्यर्थः । अधस्ताद् बीजचतुष्टयाधःस्थाने । नामसंयुक्तां साध्यसाधककर्माक्षरसंयु[20]क्ताम् । अयमर्थः—प्रथममुक्तद्रव्यैर्महाचक्रं विन्यस्य मध्यशक्तिस्थानमध्यभागे श्रीकामराजं विलिख्य कोणत्र[21]ये तदेव बीजं निष्पाद्य तद्बीजचतुष्टयाधस्ताच्छन्दलक्षितान्तःप्रदेशे

---

अथवा मध्यगामित्यादि किङ्करो भवेदित्यन्तस्यायमर्थः—[22]श्रीचक्रत्रिकोणमध्ये श्रीत्रिपु[23]रसुन्दरीरूपं विलिख्य कोणत्रयलिखितमूलविद्याहकारमध्ये पूर्ववत् सा[24]धकस्य साध्यस्य देव्या नाम संवोधनपूर्वकं लिखित्वा कर्म लिखेदित्यर्थः ॥ ५७–५८ ॥

---

१. नित्यं–से. सख. । २. हृवि–वाग. से. ब. । ३. वालं–सक. । ४. सर्वथा–वाग. अ. से. ब. सक. ख. ग. । ५. अथ मध्यगतां–घ. । ६. मध्यगो–वाग. से. । ७. भयगां–वाक. ख. ग. से. ब. अ., भयतस्तथा–सख. । ८. न्विताम्–मख. । ९. निधापयेच्च–वाग. से. ब. सक. ख. ग. । १०. दर्वाग् वै–सक. । ११. 'शत्रूणां' नास्ति–ख. ङ. । १२. रजातं–ग. घ. । १३. मित्यर्थः–घ. । १४. चक्रस्य–ख. ङ. । १५. शक्तिमध्यचक्र–ख. ङ. । १६. 'त्रिकोणोदरगां' नास्ति–ख. ङ. । १७. 'यथा' नास्ति–ग. घ. । १८. 'तथा' नास्ति–ग. घ. । १९. ष्वित्यर्थः–ग. घ. । २०. सहिताम्–ख. ङ. । २१. त्रयेऽपि–ख. ङ । २२. 'श्री' नास्ति–क. ग. छ. । २३. देवीरूपं–ख. ङ. ज. । २४ साधकसाध्यनाम देवीनाम–ख. ङ. ज. ।

1. "त्रिकोणोदरगामिति क्वाचित्कः पाठः" ( से. पृ. ११९ ) ।
2. "त्रिकोणस्य कोणत्रये मध्ये चेति चतुर्वारं विद्यां विलिख्य तदधः स्थानचतुष्के साध्यनामापि पुनः पुनर्लिखेदिति व्याचक्षते । कामकूटं चतुर्वारं लिखेदित्यपि केचित्" ( से. पृ. ११९। ) ।

**पीतद्रव्येण[२] चालिख्य[३] धारयेद्रुज्जिघृक्षताम्[1] ॥ ५८ ॥**
**नाम्ना सर्वज्ञभूतोऽपि मूको भवति तत्क्षणात् ।**
**महानीलरसेनापि[४] नाम संयोज्य पूर्वचत्[५] ॥ ५९ ॥**
**दक्षिणाभिमुखो वह्नौ दग्ध्वा तं मारयेत् क्षणात् ।**

अपरे साध्यनामार्णं साधकस्योत्तरे लिखेत् ।
अन्तरामिथियो कर्म साधकाशे समालिखेत् ॥
(प्र० सा० १०।५५–५६)

इति स्थित्या साध्यसाधककर्माक्षराणि लिखित्वा सप्राणप्रतिष्ठं यथोक्तमाराध्योक्तस्थाने निधापयेदुक्तफलसिद्धय इति । दासवत् किङ्करो भवेत् । साध्य इति शेष ॥ ५७–५८ ॥

पीतद्रव्येण हरिद्रादिना । उज्जिघृक्षताम् उद्ग्रहणिका चिकीर्पूणाम् । नाम्ना सञ्ज्ञया । अयमर्थः —विवदिपूणा प्रयोगकरणे प्रतिविवदिपोर्नाम्ना सहित चक्रंविलिख्य तान् विवदिपून् तच्चक्रं धारयेदिति । अत्राभियुक्तवचनम्—

स्तम्भे कालनिभ प्रोक्त मारणे चासित तथा ।
सुसित शान्तिकर्मादौ वश्ये रक्त समन्तत ॥ इति ।

---

पीतद्रव्येत्यारभ्य मूको भवति तत्क्षणादित्यन्तस्यायमर्थः —पीतंद्रव्य हरिद्रादि, तेन चक्र लिखित्वा तन्मध्ये त्रिकोणमध्ये प्रथम मूलविद्या तत सबोधनान्त देवीनाम पुनरमुकस्य वाच स्तम्भयेति, अन्तेऽपि मूलविद्येत्येवं लिखेत् ॥ ५८–५९ ॥

[११]महानीलोरसेनेत्यादि मारयतेऽचिरादित्यन्तेनैतदभिप्रेतम्—तस्य महाचक्रस्य मध्ये पूर्ववन्मूलविद्या लिखित्वा ततो देवीनाम सबोधनान्तं लिखित्वाऽमुक मारय[१२] मारयेति [१३]लिखेदित्यर्थः ॥ ५९–६० ॥

---

१ अङ्कितं लिखितं नित्य–खाग से. । २. सलिख्य–ख. सख. । ३. धारयेदिद्रदिगताम्–खाक ख., धारणात्रयमुत्तमम्–सध । ४. नीली–खाग. से अ. सक. ग. । ५ मारयते–खाख. से. घ. अ. सक. ख. ग. । ६. ऽचिरात्–अ. सक ग., रिपून्–व । ७ 'साधक' नास्ति–ख. । ८. साल–ख. घ. ङ । ९ शाठो घ–ग. प. । १०. 'पीन लिखेत्' नास्ति–क. ग. ङ., अग्रस्थानि कानिचन पदानि ४७ श्लोकव्याख्यायां लिखितानि । ११. 'महानीली' नास्ति–क. ग. ङ. । १२. 'मारय' नास्ति–ङ. ज. । १३. चालि–ख. ङ. ज. ।

1 'सर्वविदिद्रदिद्रमुन इति मूलपाठ" ( से. पृ. ११९ ) ।

**महिषाश्वपुरीषाभ्यां गोमूत्रे[2]णाङ्कितं लिखेत् ॥ ६० ॥**
**[3]नामा[4]रनालमध्यस्थं विद्विष्टः सर्वजन्तुषु ।**
**[5]युक्त्वा रोचनया नाम काकपक्षे[6]ण संलिखेत् ॥ ६१ ॥**

---

मूको ग्रासवाङ्निरोधः । तत्क्षणात् प्रयोगकालाविलम्बितमेव ॥ ५८–५९ ॥

महानीलरसेन महानीलपङ्केन । इदमेवास्याभिधानम् । तत्तद्देश-[7]भाषाया नामान्तरं श्रोतव्यम् । नाम साध्यस्य । पूर्ववत् वाक्स्तम्भचक्र-[8]क्रमवत् । दग्ध्वा नीलपटादौ लिखितम्[1] । मारयेत् [2](मारये)त्याख्यातपद[9]द्वयोपेतं प्रतिष्ठितप्राणं तच्चक्रं वह्नौ दग्ध्वा साध्यं मारयेदित्यर्थः ॥५९-६०॥

[3]महिषाश्वपुरीषाभ्यामित्यनेन चक्रनिर्माणद्रव्यमुच्यते । गोमूत्रेण सेचनकेन । अङ्कितं [4]विद्वेष(म?य)युगाक्षरैः । नाम साध्यस्य संज्ञाक्षरम् । आरनालमध्यस्थं [10]काञ्जिकमध्यस्थम् । कुर्यादिति शेषः ॥ ६०–६१ ॥

---

महिषाश्वेत्यादि विद्विष्टः सर्वजन्तुष्वित्यन्तेनैतदभिप्रेतम्—विद्वेषणं यथा म[11]हा चक्रमध्ये त्रिकोणमध्ये मूलविद्याङ्कितं साध्यसाधकयोर्नाम कर्मसहितं लिखेत् । [12]प्रथमं मूलविद्या पुनरमुकामुकयोर्विद्वेषणं [13]कुरु कुर्विति लिखित्वा [14]ततो मूलविद्या पुनरपि नाम पूर्ववत् । पुनरपि [15]मूलविद्या । [16]एवमङ्कितं निरोधितं लिखेदिति यावत् ।[3] [17]महिषाश्वपुरीषादि-गोमूत्रैरिति सहजवैरिजीवयोः पुरीषमूत्रैर्विद्वेषणयन्त्रं लिखेदित्यर्थः ॥ ६०–६१ ॥

---

१ षादिगोमूत्रैर्नाम ह्ङ्कितम्–अ. सक. ख. ग. । २. त्रेण समङ्कितम्–वाक. ख. । ३. क्षिप्त्वा–वाक. ख. राग. । ४. वानल–सग., बालस्य–सख. । ५. युक्तं–अ. सक. ख. ग. । ६. पक्षस्य मध्यगम्–वाक. ख. अ. ब. । ७. भापया–ग. घ. । ८. 'क्रम' नास्ति–ख. ङ. । ९. 'पद' नास्ति–ग. घ. । १०. 'काञ्जिकमध्यस्थम्' नास्ति–ग. । ११. 'महा' नास्ति–ङ. । १२. अथवा–ख. ज. । १३. 'कुरु' नास्ति–ङ. ज. । १४. पुनः–ङ. ज. । १५. 'मूल' नास्ति–क. ग. छ. । १६. एवं टक. ग. छ. । १७. 'महिषा·····लिखेदित्यर्थः' नास्ति–ग. ।

1. नीलपटादौ लिखितं दग्ध्वेत्यर्थः ।
2. मारय मारय इत्येवमाख्यातपदद्वयोपेतमित्यर्थः ।
3. "महिषाश्वेति तु मिथो वैरस्य गोव्याघ्रादेरुपलक्षणमित्यन्ये । पुरीषद्वयमेव लेखनद्रव्ये । गोमूत्रेण तु चक्रस्य सेचनमात्रमित्यपि केचित्" ( से. पृ. १२० ) ।
4. विद्वेषय विद्वेषय इत्येवं युगाक्षरैरित्यर्थः ।

**पीतद्रव्येण[1] वालिख्य[2] धारयेद्दुज्जिघृक्षताम्[3] ॥ ५८ ॥**
**नाम्ना सर्वज्ञभूतोऽपि मूको भवति तत्क्षणात् ।**
**महानीलरसेनापि[4] नाम संयोज्य पूर्ववत् ॥ ५९ ॥**
**दक्षिणाभिमुखो वह्नौ दग्ध्वा तं मारयेत्[5] क्षणात्[6] ।**

---

अधरे साध्यनामार्णं साधकस्योत्तरे लिखेत् ।
अन्तरामिथियोः कर्म साधकाशे समालिखेत् ॥
(प्र० सा० १०।५५–५६)

इति स्थित्या साध्यसाधक[7]कर्माक्षराणि लिखित्वा सप्राणप्रतिष्ठं यथोक्तमाराध्याक्तस्थाने निधापयेदुक्तफलसिद्धय इति । दासवत् किङ्करो भवेत् । साध्य इति शेष ॥ ५७–५८ ॥

पीतद्रव्येण हरिद्रादिना । उज्जिघृक्षताम् उदग्रहणिकां चिकीर्षूणाम् । नाम्ना संज्ञया । अयमर्थः—विवदिषूणा प्रयोगकरणे प्रतिविवदिषोर्नाम्ना सहितं चक्रंविलिख्य तान् विवदिषून् तच्चक्रं धारयेदिति । अत्राभियुक्तवचनम्—

स्तम्भे कालनिभं प्रोक्तं मारणे चासितं तथा ।
सुसितं शान्तिकर्मादौ वश्ये रक्तं समन्ततः ॥ इति ।

---

पीतद्रव्येत्यारभ्य मूको भवति तत्क्षणादित्यन्तस्यायमर्थः—पीत[10]द्रव्यं हरिद्रादि, तेन चक्रं लिखित्वा तन्मध्ये त्रिकोणमध्ये प्रथमं मूलविद्या ततः संबोधनान्तं देवीनाम पुनरमुकस्य वाचं स्तम्भयेति, अन्तेऽपि मूलविद्येत्येवं लिखेत् ॥ ५८–५९ ॥

[11]महानीलीरसेनेत्यादि मारयतेऽचिरादित्यन्तेनैतदभिप्रेतम्—तस्य महाचक्रस्य मध्ये पूर्ववन्मूलविद्यां लिखित्वा ततो देवीनाम संबोधनान्तं लिखित्वाऽमुकं मारय[12] मारयेति [13]लिखेदित्यर्थः ॥ ५९–६० ॥

१. अङ्कुना लिखिता नित्य–वाम से. । २. सलिख्य–ख. सख. । ३. धारयेदिन्द्रदिग्गताम्–वाक ख., धारणात्रयमुत्तमम्–सघ. । ४. नीलो–वाग. से. अ. सक. ग. । ५. मारयते–वाख. से. ख. अ. सक. ख. ग. । ६. ऽचिरात्–अ. सक. ग., रिपून्–च । ७. 'साधक' नास्ति–ख. । ८. तान्–ग. घ. ङ । ९. वादी च–ग. घ. । १०. 'पीत ''लिखेत्' नास्ति–क. ग. घ., अत्रस्थानि कानिचन पदानि ४७ श्लोकव्याख्यायां लिखितानि । ११. 'महानीली' नास्ति–क. ग. घ. । १२. 'मारय' नास्ति–ङ. ज. । १३. चालि–ख. ङ. ज. ।

1. ''सर्वविदिन्द्रदिङ्मुख इति मूलपाठ.'' ( मे. पृ. ११९ ) ।

**महिषाश्वपुरीषाभ्यां गोमूत्रेणा[2]ङ्कितं लिखेत् ॥ ६० ॥**
**[3]नामार[4]नालमध्यस्थं विद्विष्टः सर्वजन्तुषु ।**
**[5]युक्त्वा रोचनया नाम काकपक्षे[6]ण संलिखेत् ॥ ६१ ॥**

---

मूको प्राप्तवाङ्निरोधः । तत्क्षणात् प्रयोगकालाविलम्बितमेव ॥ ५८–५९ ॥

महानीलरसेन महानीलपङ्केन । इदमेवास्याभिधानम् । तत्तद्देश[7]भाषया नामान्तरं श्रोतव्यम् । नाम साध्यस्य । पूर्ववत् वाक्स्तम्भचक्र[8]क्रमवत् । दग्ध्वा नीलपटादौ लिखितम्[1] । मारयेत् [2](मारय)इत्याख्यातपद[9]द्वयोपेतं प्रतिष्ठितप्राणं तच्चक्रं वह्नौ दग्ध्वा साध्यं मारयेदित्यर्थः ॥५९-६०॥

[3]महिषाश्वपुरीषाभ्यामित्यनेन चक्रनिर्माणद्रव्यमुच्यते । गोमूत्रेण सेचनकेन । अङ्कितं [4]विद्वेष(म१य)युगाक्षरैः । नाम साध्यस्य संज्ञाक्षरम् । आरनालमध्यस्थं[10] काञ्जिकमध्यस्थम् । कुर्यादिति शेषः ॥ ६०–६१ ॥

---

[17]महिषाश्वेत्यादि विद्विष्टः सर्वजन्तुष्वित्यन्तेनैतदभिप्रेतम्—विद्वेषणं यथा मेदो[11] चक्रमध्ये त्रिकोणमध्ये मूलविद्याङ्कितं साध्यसाधकयोर्नाम कर्मसहितं लिखेत् । प्रथमं[12] मूलविद्या पुनरमुकामुकयोर्विद्वेषणं कुरु[13] कुर्विति लिखित्वा ततो[14] मूलविद्या पुनरपि नाम पूर्ववत् । पुनरपि मूल[15]विद्या । एवम[16]ङ्कितं निरोधिनं लिखेदिति यावत् ।[3] महिषाश्वपुरीषादिगोमूत्रैरिति सहजवैरिजीवयोः पुरीषमूत्रैर्विद्वेषणयन्त्रं लिखेदित्यर्थः ॥ ६०–६१ ॥

---

१ षादिगोमूत्रैर्नाम टङ्कितम्—अ. मक. ख. ग. । २. त्रेण समङ्कितम्—याक. ख. । ३. लिप्त्वा—त्राक. ख. सग. । ४. वानर—मग., वाऽम्य—मख. । ५. युक्तं—अ, गक. ख. ग. । ६. पक्षस्य मध्यगम्—त्राक. ख. अ. ब. । ७. भाषया—ग. घ. । ८. 'क्रम' नास्ति—च. ङ. । ९. 'पद' नास्ति—ग. घ. । १०. 'काञ्जिकमध्यस्थम्' नास्ति—ग. । ११. 'महा' नास्ति—ङ. । १२. अथवा—ख. ज. । १३. 'कुरु' नास्ति—ङ. ज. । १४. पुनः—ङ. ज. । १५. 'मूल' नास्ति—क. ग. छ. । १६. एवं टक. ग. ङ. । १७. 'महिषा·····लिखेदित्यर्थः' नास्ति—ग. ।

1. नीलपटादौ लिखितं दग्ध्वेत्यर्थः ।
2. मारय मारय इत्येवमाख्यातपदद्वयोपेतमित्यर्थः ।
3. "महिषाश्वेति तु मिथो वैरस्य गोव्याघ्रादिद्वन्द्वस्योपलक्षणमित्यर्थः । पुरीषद्वयमेव लेखनद्रव्यं । गोमूत्रेण तु चक्रस्य सेचनमात्रमित्यपि केचित्" ( सं. पृ. १२० ) ।
4. विद्वेषय विद्वेषय इत्येवं युगाक्षरैरित्यर्थः ।

नीलकर्पटके सम्यङ्नीलसूत्रेण वेष्टयेत् ।
लम्बमानं तदाकाशे[2] उच्चाटनकरं[3] परम् ॥ ६२ ॥
दुग्धलाक्षारोचनादिमहानीलैरसादिभिः[4] ।
लिखित्वा धारयेद्[5] देवि चातुर्वर्ण्यं वशं नयेत्[6] ॥ ६३ ॥

---

युक्त्वा । उच्चाटनयुगेन[1] योजयित्वेति यावत् । नाम साध्यस्य । काकपक्षेण लेखन्या । नीलकर्पटके कृष्णपटे । वेष्टयेत्[8] बध्नीयात् । तद् चक्रम् ॥ ६१–६२ ॥

दुग्धेति । दुग्धं क्षीरम् । चातुर्वर्ण्यं जातिचतुष्टयम् । [2]द्रव्यचतुष्टयेन वर्णचतुष्टय[9] वशीकुर्यादिति तात्पर्यम् ॥ ६३ ॥

---

युक्त्वा[10] रोचनयेत्यादि उच्चाटनकर परमित्यन्तस्यायमर्थः—गोरोचनया काकपक्षेण[11] नीलकर्पटकस्य[12] मध्ये चक्रं विलिख्य[13] तन्मध्ये आदौ साध्यनाम द्वितीयान्तं लिखित्वा[14] उच्चाटय उच्चाटयेति कर्मपदान्ते मूलविद्यां लिखेदिति यावत् ॥ ६१–६२ ॥

दुग्धलाक्षेत्यादि चातुर्वर्ण्यं वश भवेदित्यन्तस्यायमर्थः—लाक्षाशब्देन ज(तुरु?तु)च्यते । अत्र[15] चक्रनामादिलेखनं वशीकरणकर्मवज्ज्ञातव्यम् ॥ ६३ ॥

---

१. एतन्नीलीपटे–सख ग. । २. तदा कार्यं–सक, हृदाकाशे–सख. । ३. परमुच्चाटनं भवेत्–वाग से., उच्चाटयति तत्क्षणात्–सक । ४. नाभिर्म–से. व. सख. ग । ५. नीली-रसेन च–वाग. से. सख. ग., नीली–म सक । ६. च्चय–वाग. से । ७. भवेत्–अ से. ब. सख., भवेद्ध्रुवम्–सग. । ८. 'वेष्टयेत् बध्नीयात्' नास्ति–ख. ड. । ९. 'वर्णचतुष्टय' नास्ति–ख. ड. । १०. 'युक्त्वा यावत्' नास्ति–ग. । ११. पक्षस्य–ग. ड. ज. । १२. 'नील-कर्पटकस्य' नास्ति–ख. ड. ज. । १३. लिखित्वा–ख. ड. ज. । १४. [?]त्वात्र–ख. ड., त्वात्रोच्चाट-येति–ज. । १५. अत्रापि–ड. ज., इत परम्–'नाम्ना विना ध्यानेनैव' इत्यधिक पाठ–क. ग. । स चाप्रासङ्गिक इव, ७१ श्लोकस्य नाम्नेति-पदव्याख्यायां स्थापयितुमर्हः ।

1 उच्चाटय उच्चाटय इत्येवमुच्चाटनयुगेनेत्यर्थ ।

2 "एतेन चत्वारि द्रव्याणि चतुर्णां वर्णानां वशीकरणे यथासंख्यमन्वियन्तीति विमर्शिनीकारोक्ति-र्निरस्ता" ( से. पृ १२० ) ।

**एतेनैव विधानेन जलमध्ये यदा क्षिपेत् ।**
**सौभाग्यमतुलं तस्य स्नानपानादिना भवेत् ॥ ६४ ॥**

एतेनैवेति । एतेन अनन्तरोक्तविधिना । जलमध्ये वारिधान्याम् । क्षिपेत् । चक्रमिति शेषः । तस्य साधकस्य । आदिशब्देन मुखसेचनं लक्ष्यते । अत्रेदं सूचितम्—दीक्षाशब्दितनैमित्तिकाद्यभिषेकसमये[1] चक्रं कनकपट्टे विलिख्य भूत(प्र?ल)स्थितमहाचक्रमध्यस्थितस्य सकूर्चासनस्य सनवरत्नस्य वासोयुगावृतमुखस्याश्वत्थादिस्त(म्ब?व)कालङ्कृतस्यान्तर्निहितकूर्चस्याभिषेककुम्भस्योदरे प्रक्षिप्य सेचनक्रियानन्तरं कुम्भादिभिः सह तत्कनकयन्त्रं प्राणदात्रे गुरवे सदक्षिणं दद्यात् साधक इति । अत्राभियुक्तोक्तिः—

अभिषिच्य यन्त्रकलशं गुरवे प्रददातु संयतमतिः सुमतिः ।
दुरितापनोदविषये द्युतये यशसे श्रियै च मतिसंयतये ॥
( प्र० सा० २१।५२ )

अभिषिच्य पुनः शिष्यं कुम्भादीन् गुरुराहरेत् ।
( प्र० सा० ३१।२४ )

प्राणप्रदानकर्त्रे न च कार्यं वित्तशाठ्यममलधिया ॥ इत्यादि ॥६४॥
( प्र० सा० २५।१९ )

---

एवमेवेत्यादि न संशय इत्यन्तस्यौत्मरक्षाकर्मवन्नामलेखनम्, चक्रलेखनं तु दुग्धलाक्षादिभिरेव कार्यमित्यर्थः ॥ ६४ ॥

---

१. एतदेव–चाक. ख., एवमेव–अ. सग., एतद्देवि–सक. । २. विनिक्षिपेत्–चाख. से. ब. सक. ख., यदि क्षिपेत्–सग. । ३. मुत्तमं–ब. । ४. लोके–सख., देवि–सग. । ५. पानाद्य संशय–चाक. ख. अ. । ६. 'अत्रेदं…इत्यादि' नास्ति–ख. ड. । ७. युगलावृताश्वत्था–ग. । ८. विलिख्य–घ. । ९. 'अभिषिच्य' इत्येष श्लोको नास्ति–ग. । १०. स्यायमयं श्रात्म–ख. ड. ज. ।

1. "यत्तु विमर्शिन्यामुक्तं दीक्षाभिषेकसमये कनकपट्टचक्रं कुम्भे निक्षेप्यम् । अभिषेकोत्तरं च तच्चक्रं गुरवे देयमित्ययमर्थोऽनेन लब्ध इति, तत्तन्त्रान्तरे न दृष्टम्" ( से. पृ. १२१ ) ।

ऐतन्मध्यगतां देवि नगरीं वा वराङ्गनाम् ।
सप्ताहात् क्षोभयेत् सत्यं ज्वलमानां विचिन्तिताम् ॥ ६५ ॥
महापातकयुक्तात्मा यदि देवि प्रपूजयेत् ।
शमीदूर्वाङ्कुराश्वत्थपल्लवैरथवाऽर्कजैः ॥ ६६ ॥
मासेन हन्ति कलुषं सप्तजन्मकृतं नरः ।
लिखित्वा पीतवर्णं तु चक्रमेतद्यदाऽर्चयेत् ॥ ६७ ॥

---

एतदित्यादि । देवीत्यामन्त्रणम् । एतच्चक्रमध्यगतां मध्यभागस्थिता शक्त्युदरविलिखितमध्यबीजमध्यगताम् । ज्वलमानां मन्त्रपावकशिखया । विचिन्तितां तामुक्तकाल[12] ध्याताम् ॥ ६५ ॥

महापातकेति । अत्रापि देवीत्यामन्त्रणे[13] । महापातकयुक्तात्मा महद्भिः पातकैर्युक्तोऽहमिति[14] मन्यमान । प्रपूजयेत् । चक्रमिति शेष । शमीति । पल्लवशब्द शम्यादिभिश्चतुर्भिः सवद्ध्यते । अर्कजैः अर्कपल्लवैः । [1]पुष्पस्याप्युपलक्षणमेतत् । कलुषम् एनः । सप्तजन्मकृतमिति प्राचीनानन्त[15]कोटिजन्मकृतपापोपलक्षणम् । नरः साधक ॥ ६६–६७ ॥

---

एतदित्यारभ्य विचिन्त्य तामित्यन्त स्पष्टार्थ । एत[16]दित्यत्रापि चक्रमुच्यते । अत्र नाम्ना विना ध्यानेनैव साधनमभिप्रेतम् ॥ ६५ ॥
म[17]हापातकेत्यादि नर इत्यन्त सर्वपापप्रायश्चित्तप्रदर्शक. स्पष्टार्थ ॥ ६६–६७ ॥

---

१. अथवैतद्गतां–सम्व. । २. देवीं–वाग. से. सख । ३. नागरीं–वाग. से सख. ग. । ४. वा सुरा–वाग से, चातुराङ्गनाम्–सम्व. ५. सम्यग–मक. सद्य–सख. । ६. न्य साम्–वाक ख. अ. न्नयन–मक., त्नयेन–मग. । ७. देवीं–वाग. से सख. ग । ८ महा–वाम्व से. । ९. वर्णेन–वाग. से । १०. च–अ. सख. । ११. चक्रमध्ये तथा–मक. । १२. काल–ग. घ ड. । १३. णम्–घ. ग. ड. । १४. त्तमिति–ख. ड. । १५. 'कोटि' नास्ति–ग. ड. । १६. 'एत प्रतम्' नास्ति–ग. ड. । १७. 'महा स्पष्टार्थ' नास्ति–ग. ड. ।

1 "अर्कभरिति तु तत्पुष्पस्याप्युपलक्षणमिति वदन्ति' ( से पृ १२१ ) ।

पूर्वाशाभिमुखो भूत्वा स्तम्भयेत् सर्ववादिनः ।
सिन्दूररेणु[1]लिखितं पूजयेदुत्तरामुखः ॥ ६८ ॥
[2]यदा तदाऽस्य[3] वशगो लोको भवति सर्वदा[4] ।
[5]गैरिकेणैतदालिख्य पूजयेत् पश्चिमामुखः ॥ ६९ ॥
स[6] च सर्वाङ्गनाकर्षवश्यक्षोभकरो भवेत् ।
दक्षिणाभिमुखो भूत्वा कृ[7]ष्णवर्णं [8]यदाऽर्चयेत् ॥ ७० ॥
यस्य नाम्ना तस्य नित्यं म[9]न्त्रहानिस्तु जायते ।

---

पीतवर्णं तालहरिद्रादिभिः । सिन्दूररेणुलिखितम् । चक्रमित्यध्याहार्यम् । गैरिकेण धातुना । एतत् चक्रम् । यः साधकः । कृष्णवर्णम् । यस्य [10]साध्यस्य । नाम्ना संज्ञया । तस्य [11]साध्यस्य । तद्वद् [12]यथा दिङ्मुखः साधयति ।

---

लिखित्वेत्यादि वादिन इत्यन्तस्यायमर्थः—हरिद्रोन्मत्तहरितालपङ्केन श्रीचक्रं लिखित्वा तन्मध्यकोणे [13]वादिनाम आद्यन्तमूलविद्यारोधितं पूर्ववल्लिखित्वा पूजयेदिति यावत् । सिन्दूरेत्यादि भवति सर्वदेत्य[14]न्तः सर्ववश्यप्रयोगवन्नामलेखनादिसहितो ज्ञातव्यः । चक्रमित्यारभ्य क्षोभकरो भवेदित्याकर्षणवन्नामादिसहितो ज्ञातव्यः । दक्षिण इत्यादि जायत इत्यन्तस्यायमर्थः[15]—महानीलीरसादिना चक्रं लिखित्वा तन्मध्ये श्रीमूलविद्यान्तेऽमुकस्य मन्त्रहानिं [16]कुरु कुर्विति लिखि[17]त्वा पूजयेदित्यर्थः । तद्वदित्यादि कारक्रमित्यन्त-

---

१. रेणाप्युल्लिखित—से., रेणादि—ब., रेणाद्—सक., रलेख—साव. । २. यदि तद्वास्य—सग. । ३. सु—सक. । ४. सर्वथा—अ. से. ब. सग. । ५. चक्रं गैरिकमालिख्य—वाक. ख., गैरिकेण तदालिख्य—से. । ६. सोऽपि—वाख. से., यतः—सग., योऽसौ—व., तदा—सक. । ७. कृष्णं चक्रे समर्चयेत्—वाग. से. । ८. सम—सक. ख. । ९. सस्य—सख. । १०. साधकस्य—ख. ङ. । ११. साधकस्य—ग. । १२. यया महादिङ्—ग. घ. । १३. 'वादिनाम' नास्ति—ख. ङ. ज. । १४. त्यन्तं पूर्वं—ख. ङ. ज. । १५. इतः परम्—'नीलीरसादि द्रव्यं हरिद्रादि तेन चक्रं लिखित्वा तन्मध्यत्रिकोणमध्ये मं मूलविद्या, ततः संबोधनान्तं देवीनाम पुनरमुकस्य वाचं स्तम्भय स्तम्भयेति, अन्ते मूलविद्या इत्येवं लिखेत् । महानीली…रमुकस्य वाचं स्तम्भय स्तम्भयेति, अन्ते मूलविद्या इत्येवं लिखेत्' इत्यधिकः पाठः—च., स चात्रानावश्यकः, पूर्वं स्तम्भनप्रकरणे ५८ श्लोकव्याख्यायामस्य पाठस्य विद्यमानत्वात् । १६. 'कुरु' नास्ति—ङ. ज. । १७. आलिख्य—क. ख. छ., आरभ्य—ङ ज. ।

तद्वद् दिगन्तरालेषु पूजितं परमेश्वरि[2] ॥ ७१ ॥
स्तम्भविद्वेषणव्याधिशत्रूच्चाटनकारकम् ।
रोचनालिखितं देवि दुग्धमध्ये वशङ्करम् ॥ ७२ ॥
[ क्षिप्तं[3] गोमूत्रमध्ये वा शत्रूच्चाटनकारकम् ।
तक्रमध्यगतं चक्रं विद्वेषणकरं परम् ॥ ]
ज्वलज्ज्वलनमध्यस्थं सर्वशत्रुविनाशनम् ।
अथवा देवदेवेशि यदेकान्ते चतुष्पथम् ॥ ७३ ॥
तत्समीपे लिखेच्चक्रं सिन्दूरेण महाप्रभम् ।
सर्वबाह्यत आरभ्य यावन्मध्यं महेश्वरि ॥ ७४ ॥

---

दिगन्तरालेषु आग्नेयादिषु । पूजितं चक्रम् । दुग्धमध्ये क्षीरमध्ये । ज्वलनो वह्निः ॥ ६७–७३ ॥

एकान्ते विजने । तत्समीप इत्यत्र तच्छब्दश्चतुष्पथं लक्षयति । महाप्रभम् अत्युज्ज्वलम् । सर्वबाह्यत इत्यस्यायमर्थः—पूज्येऽस्मिन् महति चक्रे [1]यद्यदणिमादिसिद्ध्यादीनां महात्रिपुरसुन्दर्यन्तानां देवतानां पूजास्थानमस्ति,

---

स्यायमर्थः—[1]ईशानादिवायव्यान्तं विदिङ्मुखस्तत्तद्द्रव्यैस्तत्तत्कर्मवन्नामसहितं चक्रं पूजयेदित्यर्थः । रोचनालिखितमित्यादि । अत्रापि वशीकरणकर्मवत् सर्वं नामादि । क्षिप्तमित्यादेरुच्चाटनकर्मवत् सर्वम् । (चक्र?तक्र)मध्यगतमित्यादेर्विद्वेषणकर्मवन्नामादिलेखनम् । ज्वलज्ज्वलनमित्यादेर्मारणकर्मवत् सर्वं लोहपट्टे समुत्कीर्य त्रिकटुकचित्रमूलविषादिपङ्केनालिप्याधोमुखमग्नौ निक्षिपेदिति यावत् ॥ ६७–७३ ॥

अथवेत्यारभ्य खेचरी भवेदित्यन्तस्यायमर्थः—[2]चक्रचतुरस्रमारभ्य त्रिकोणमध्यपर्यन्तं प्रतिदैवतमासनस्थानेष्वकारादिक्षकारान्तं वाङ्कुराकारं यथा भवति तथा लिखे-

---

१ तां–ख. । २ रीम्–ख । ३ एष श्लोकोऽधिकः–खाक ख ग से. सक. । ४. थे–सख ग । ५ सर्वं–ख । ६ मुरे–सक ख । ७. सूचयति–ख. ड. । ८. मादिशक्तिसि–ख. ड., मादिमहासि–ग. । ९. 'देवतानां' नास्ति–ख. ड. । १०. वाग्भव कामराज–ख. ड. ज. ।

1. "तेन पूर्वोत्तरापरदक्षिणक्रमस्य पूर्वं कल्पत वायीशानाद्याग्नेयान्त क्रम इति कल्पना परास्ता । ईशानादिवायव्यान्त क्रम इति रत्नावलीकारस्य तु महान् प्रमाद" (से. पृ १२२) ।
2. अणिमाया स्थाने स्वाभिमुखाग्र कोण इत्येशानाग्नेयाभिमुख्येन द्वे वामदक्षिणरेखे विभाव्य

अकारादिक्षकारान्तां मातृकां तत्र[1] विन्यसेत् ।
पूजयेद् रात्रिसमये कुलाचारक्रमेण यः[2] ॥ ७५ ॥
तत्क्षणात्[3] स[4] महेशानि[5] साधकः खेचरो भवेत् ।

तत्र[6] तत्राकारादिक्षकारान्ता मातृकामकथादित्रिरेखात्मना[7] मध्यस्थहक्षेण च त्रिकोणरूपकुलासनात्मना विन्यस्य पूजयेदिति । ननु देवता कुत्र निवसन्ति? मन्त्रेष्विति ब्रूम । यच्छ्रुतिः—"क्व स्थ क्व व सद्यो हव्य वक्ष्याम इति छन्द स्वित्यब्रुवन् । गायत्र्या त्रिष्टुभि जगत्यामिति । तस्माच्छन्दस्सु सद्भ्य आदित्येभ्य आङ्गीरसी प्रजा हव्य वहन्ति" ( तै० ब्रा० २।२।३।७ ) इति । आह च—[1]"मणिवन्मन्त्रमालम्ब्य प्रभावन्मन्त्रदेवता" इति । रात्रिसमये अर्धयामिन्याम् । यदागमः[9]—"पूजोदितार्धयामिन्या पितृवेश्मादिशायिनाम्" इति । कुलाचारक्रमेण महासमयमहानुष्ठानमार्गेण[10] ॥ ७३-७६ ॥

---

दित्येतत् । अयमर्थ[11]—प्रतिदैवतमासन[12] कुलासनवाग्भवं[13] कृत्वेति मन्तव्यम् । तदुक्त श्रीसिद्धनाथपादै —

वीज गुह्ये न्यसेदाद्यमकथादित्रिपङ्क्तिगम्[14] ।
शेप वीजद्वय कन्दमित्येतत्कौलमासनम् ॥ इति ।

अत्र[15] वीजद्वयमिति क्षकारहकाराविति बोध[16] ॥ ७३-७६ ॥

---

१ नात्र-ख । २ तु-सक ख । ३ तत क्षणात्-सक, ततश्चक-सत । ४. सा-सग । ५ महादेवि-सग । ६ 'तत्र' नास्ति-ख. ङ । ७ रेखात्मक-ख. ङ. । ८. सतीति-ख. ङ । ९. यथा-ख. । १०. र्गेणेत्य वप -ख. ङ. । ११. 'अयमर्थ' नास्ति-क. ग. छ. । १२. देवता-ख ङ. ज । १३. 'कुलासनवाग्भव' नास्ति-क. ग. छ. । १४. त्तिश-ध. ग. छ. । १५. 'अत्र वीजद्वयमिति' नास्ति-क. ग छ । १६ यावत-क. ग छ. ।

मध्यबिन्दोरुपरि यथा तिर्यग्रेखा पतति तथा पूर्वरेखा विभाव्य तासा स्थानेऽकथादिषोडश षोडशमातृका विलिख्य कोणत्रये हलक्षांल्लिखेदिति केचित । अणिमाद्यखिलदेवतानामासन स्थाने प्रत्येक वागुराकारेण सर्वमातृका पुन पुनर्लेख्या इत्यन्ये' ( से. पृ १२२ ) ।

1 'मन्त्र मणिवदालम्ब्य प्रभाव मन्त्रदेवताम् । जपध्यानादिक कुर्यान्न तादस्थ्येन कुत्रचित ।।" इत्येव क्षेमराजेन स्वच्छन्दोद्योते ( भा १, प २, पृ ७८ ) उद्धृत श्लोक ।

पू[१]जयित्वा म[२]हेशानि तद्वदेकत[३]रो गिरौ ॥ ७६ ॥
अजरामरतां स[४]म्यग् लभते नात्र संशयः ।
महाभूतदिने वा[५]पि श्मशाने यदि पूजयेत् ॥ ७७ ॥
पूर्ववन्निशि देवेशि साधकः स्थिरमानसः ।
पादुकाखड्गवेतालसिद्धद्र[६]व्यमहोदयाः ॥ ७८ ॥

---

तद्वत् खेचरताप्राप्त्याराधनक्र[७]मवत् । [1]एकतरः असहायः । गिरौ पर्वते ॥ ७६ ॥

महाभूतदिने [2]कृष्णचतुर्दश्याम् । स्थिरमानसः निर्विचिकित्सः । पा[८]दुका पादुकासिद्धिः, सा च वह्निसलिलादिषु यात्रा । [3]इदं तु लेपादिना विना मन्त्रसिद्ध्यैवेत्यर्थः । खड्गः खड्गसिद्धिः । सा च स्वयंप्रहर्तृता । वेतालो वेतालसिद्धिः । सा च पि[९]शाचादिपरिकरवत्ता । सिद्धद्रव्यम् अप्रयत्नसम्पन्न-पायसापूपादिसिद्धिः[१०] । महोदयः अणिमादिविभूतिविशेषः । अञ्जनम् अ[११]ञ्जन-सिद्धिः । विव[१२]रं बिलद्वारलोकान्तरसिद्धिः । चेटी दासीसिद्धिः । यक्षी भोग-योग्यविशिष्टालङ्कारभूषितदिव्यपुरन्ध्रीसिद्धिः । दूरगतिः दूराध्वगमनम् ।
[१३]अयमर्थः—चित्सारपरमार्थाया देवतायाः सर्वगतत्वात् साधकोत्तमस्य

---

पूजयित्वेत्यादि स्पष्टार्थः। प्रयोगस्त्वयमेव। [१४]स्थाने विशेष इति विशेषः॥७६-७७॥
महाभूतदिनमिति [2]कृष्णाङ्गारचतुर्दशी । सिद्धद्र[१५]व्ये रसायनादि । मनश्शिला [१६]स्पर्श-

१. पुजयेद्रात्रिसमये–सक. । २ महादेवि–वाक. ख. सव. । ३. तरौ–वाग. से. सक. ख. ग । ४. सत्य–वाग. से. । ५. घापि–सल. ग. । ६. कव्यमन शिलाः–वाक. ग., द्रव्यं मन शिला–अ. । ७. 'श्रमवत्' नास्ति–ख. ङ. । ८. 'पादुका' नास्ति–ग. घ. । ९. पिशाचपरि–ख. ङ. । १० सिद्धिदम्–घ. । ११. सा च निधिसिद्धिः–ग. । १२. वियद्द्वारं–ग. । १३. 'अयमर्थ.' नास्ति–ख. ङ. । १४. स्थानतिथिविशेष एव विशेष –ख. ङ., स्थानविशेष-तिथिविशेष–ज. । १५. द्रव्यमिति–ख. ङ. ज. । १६. स्वर्ण–ख. ।

1. "एकतर इति पाठ स्वीकृत्यासहाय इति व्याख्यानमर्णवादितन्त्रान्तरविरुद्धम्" (से.पृ. १२३)।
2. महाभूतदिनं चतुर्दशी । साऽपि कृष्णैवेति केचित् । साऽपि भौमयुक्तैवेत्यपरे" (से.पृ. १२३)।
3. सामान्ये नपुंसकम् । इव पूर्वोक्तयानप्रनिपाद्यं पादुकासिद्धिजन्य वह्निसलिलादिषु यात्रारूपं प्रयोजनमत्र लेपादिना विना मन्त्रसिद्धिमात्रेणैव फलतीति यावत् ।

**अञ्जनं[1] विवरं[2] चेटी[3] यक्षी दूरगतिस्तथा ।**
**यत्किञ्चित्सिद्धि[4]सन्तानं विद्यते[5] भुवनत्रये ॥ ७९ ॥**
**तत्सर्वमेव सहसा साधयेत् साधकोत्तमः ।**

इति श्रीनित्याषोडशिकार्णवे द्वितीयः पटलः ॥

—:०:—

---

देवतात्मत्वेन विश्रान्तेर्यस्मिन् देशे गमनसंकल्पः समुन्मिषितस्तस्य दे(व?श)स्य सदैव पुरःस्थितत्वादुचितैवोक्तिरिति ।

मायूरपित्तकृ[6]कवाकुवसेन्द्रकोपकारञ्जबीजतु[7]पगुग्गुलिकां कटिस्थाम् ।
हेमावृतां वहति यः स तु योजनानां सद्यः शतं व्रजति पक्षिपतिर्दिवीव ॥

इत्यभियुक्तोक्त्या [8]गुलिकादिसिद्ध्या दूराध्वगमनम्, इ[9]ह तु विद्यासिद्ध्या । सिद्धिसन्तानं सिद्धिनिचयः । सहसा "सम्यक्सिद्धैकमन्त्रस्य नासाध्यमिह किञ्चन" इति स्थित्या यद्यन्मनसा संकल्पयेत् तत्तत्सर्वम[10]भिसन्ध्यव्यव[11]धानेन संपादयेदिति शिवम् ॥ ७७–७९½ ॥

एवमृजुविमर्शिन्यां नित्याषोडशिकार्णवे ।
शिवानन्दपरामृ[12]ष्टो द्वितीयः पटलो गतः ॥

—:०:—

---

शिला । चेटी दासीजनः[13] ॥ ७७–७९½ ॥

इति श्रीविद्यान[14]न्दविरचिते चतुश्शतीटिप्पणेऽर्थरत्नावल्यां
[15]प्रयोगविधिर्द्वितीयः पटलः ॥

—:०:—

---

१. चिम्बुकं–सख. । २. चैव–ञाक. ख. । ३. चेटकं यक्षिणीं तथा–याक. ख., चेटकं चैव यक्षिणीम्–सक., चेटिकां–सग. । ४. द्रुसमयं–सक., सिद्धनिचयो–सख. ग., निचयं–याक. ख. । ५. वर्तते–सक. । ६. कृकलास–ख. । ७. तुपतोपकर्लि–ग. घ. । ८. 'गुलिकादिसिद्ध्या' नास्ति–ख. । ९. 'इह तु…सिद्धिनिचयः' नास्ति–ख. । १०. मपि–ख. ङ. । ११. सानेन–ग. । १२. मृष्टं द्वितीयं पटलं गतम्–ख. ङ. । १३. इतः परम्–'इति प्रयोगविधिः' इत्यधिकः पाठः–क. ग. छ. । १४. नन्दनाथ–ख. ङ. ज. । १५. 'प्रयोगविधिः' नास्ति–ख. ङ. ज. ।

# अथ तृतीयः पटलः

देव्युवाच

भगवंस्त्रिपुरामुद्राः सूचिता न प्रकाशिताः ।
कथं विरचनं तासां क्रियते वद शङ्कर ॥ १ ॥

ईश्वर[1] उवाच

शृणु देवि प्रवक्ष्यामि मुद्राः सर्वार्थसिद्धिदाः ।
याभिर्विरचिताभिस्तु संमुखी[2] त्रिपुरा भवेत् ॥ २ ॥

---

एवमनल्पप्रयोगशरीर द्वितीय पटल व्याख्यायेदानीमष्टाविंशतिसूत्र[3]-सन्दर्भस्य देवतासान्निध्यकरमुद्राविन्यासप्रतिपादकस्य तृतीयस्य[4] पटलस्य व्याख्या[5] लिख्यते—श्रीदेव्युवाचेत्यादि[6] । त्रिपुरामुद्राः त्रिपुराम्बासम्बन्धिन्यो[7] मुद्रा. । मुद्रानाम काश्चन शक्तय । उक्तं[8] च—

मोचयन्ति ग्रहादिभ्य. पाशौघ[9] द्रावयन्ति च ।
मोचन द्रावण यस्मान्मुद्रास्ता शक्तयो[10] मता. ॥ इति ।

अभियुक्तोक्तिरपि[11]—

द्रावणात् पाशजालस्य तत्परस्य च मोचनात्[12] ।
मुद्रापीठमिति प्रोक्त कामरूप नमाम्यहम् ॥ (सं. प.) इति ।

---

अथ तृतीये[13] पटले सर्वानुवादि टिप्पण लिख्यते । श्रीदेव्युवाचेत्यादि भवेदित्यन्तस्य[14] स्पष्टोऽर्थः ॥ १-२ ॥

---

१. भैरव–सग., शङ्कर–सघ. । २. सौ–सग घ., सान्निध्य त्रिपुर–सग. । ३. सूत्रस्य–स. । ४. 'तृतीयस्य पटलस्य' नास्ति–ग. । ५. विवृतिरुच्यते–स. । ६. भगवन्नित्यादि–स । ७. त्रिपुराया –ग. घ. । ८. 'उक्त च' नास्ति–ग. ङ । ९. पाशौघान्–चि. । १०. शक्तय स्मृता –स. ङ., परिकीर्तिता –चि. । ११. अभियुक्तैरपि–स. घ. । १२. मोदनात्–ग. घ. । १३. पप–क. ग. ङ. छ. । १४. स्पन्त स्पष्टार्थ –ङ. ज. ।

परिवर्त्य करौ स्पृष्टावङ्गुष्ठौ कारयेत् समौ ।
अनामान्तर्गते कृत्वा तर्जन्यौ कुटिलाकृती ॥ ३ ॥
कनिष्ठिके नियुञ्जीत निजस्थाने महेश्वरि ।
त्रिखण्डैषा[3] महामुद्रा त्रिपुराह्वान[4]कर्मणि ॥ ४ ॥

सूचिताः "संक्षोभ" ( १।१८४ ) इत्यनेन । विरचनं बन्धः । तासां मुद्राणाम् । याभिः मुद्राभिः । संमुखा त्रिपुरा भवेदित्यस्यायमर्थः—मुद्राविरचने कृते साधकं प्रसन्नदृशा पश्यतीति ॥ १–२ ॥

परिवर्त्येतिद्वयं त्रिखण्डामुद्राप्रतिपादनपरम् । परिवर्त्य परस्परं क्षिप्ताङ्गुली कृत्वा । स्पृष्टौ[5] इतराङ्गुलिभ्योऽविविक्तौ । [1]समौ अन्योन्यम्[6] । अनामान्तर्गते [2]अनामाभ्यामन्तर्गते । कुटिलाकृती कुटिलाकारे । त्रिपुराह्वानकर्मणि, प्रयोक्तव्येति शेषः । अयमर्थः—प्रथममात्मीयौ हस्तौ परिवर्त्याङ्गुष्ठौ परस्परश्लिष्टौ[7] कृत्वाऽनन्तरं समोच्छ्रितमध्यमाङ्गुलिद्वयोभयपार्श्वे व्यत्यासेनान्तर्गतानामिके तर्जन्यौ कुटिलाकारे विधाय पुनः कनिष्ठिके समे निजस्थाने नियुञ्ज्यादितीयमावाहनमुद्रा त्रिखण्डाख्या ॥ ३–४ ॥

परिवर्त्य कराविति । हस्तावन्योन्यं यथा स्पृष्टाङ्गुली भवतस्तथा कृत्वेत्यर्थः । अङ्गुष्ठौ कारयेत् समाविति । उभयकरज्येष्ठाङ्गुलिद्वयं समं कुर्यादिति । परस्परस्पृष्टौ दण्डाकारौ यथा भवतस्तथा कर्तव्यमिति[10] यावत् । अनामान्तर्गते कृत्वेति । उभयकरानामाङ्गुलिद्वयमधः कुर्यादिति यावत् । कनिष्ठिके नियुञ्जीत निजस्थाने महेश्वरीति । कनिष्ठिकाङ्गुली पूर्वं[11] यथा स्थिते तथैव कुर्यात्, न त्वन्तर्गते इति यावत्[12] । तर्जन्यौ कुटिलाकृती इति । तर्जनीद्वयं कुटिलाकृती कुर्यात् । अप्रतिषिद्धमनुमतमिति न्यायेन मध्यमाङ्गुलिद्वयं यथास्थितमेव[13] कुर्यात्, न त्वन्तर्गतमिति । त्रिखण्डैष महामुद्रा त्रिपुराह्वानकर्मणीति । इयं रचिता मुद्रा त्रिखण्डासंज्ञा[14] त्रिपुराह्वानकर्मणि नियुक्तेत्यर्थः ॥ ३–४ ॥

१. स्पृष्टा–वाग. से. ब., कृत्वा–सा. । २. मुरे–सग. । ३. खैष–वाग. अ. से. ब. सरु. ग. घ. । ४. ध्यान–राग. घ । ५. स्पष्टौ–स. ग. घ. । ६. 'अन्योन्यम्' नास्ति–घ. । ७. श्लिष्टौ समौ स्पष्टौ कृत्वा–स. ट., स्पृष्टौ–घ. । ८. नितरां–ट. । ९. कृत्वेति–स. ट. ज. । १०. 'इति यावत्' नास्ति–स. । ११. इय मिप –स. । १२. 'यावत्' नास्ति–ट. ज. । १३. स्थित तथा–स. ट., 'एव' नास्ति–ज. । १४. सज्ञिता–स. ट. ज. ।

1. अन्योन्यं समाविल्यर्थः । आवरणरस्यबृहत्तामिनेषा व्याख्यानशैली स्थलान्तरेष्वप्यवलोक्यते ।
2. "अनामान्तर्गते इत्यत्र षष्ठीतत्पु । अनामाभ्यामन्तर्गते इत्यपि केचित्" ( से. पृ. १२५ ) ।

औ ॐ नमो भगवति ज्वालामालिनि देवि देवि सर्वभूतसहारकारिके जातवेदसि ज्वलन्ति ज्वल ज्वल प्रज्वल प्रज्वल ह्रा ह्री ह्रू र र र र र र र ह्रुं फट् स्वाहा ज्वालामालिनीनित्याश्रीपादुका पूजयामि ।

अ च् क्रौ चित्रानित्याश्रीपादुका पूजयामि ।

अ मूलमुचार्य महात्रिपुरसुन्दरीनित्याश्रीपादुका पूजयामि ।

मध्यप्राक्र्यस्रमध्यान्तस्थितिनित्यार्चनात् पुन ।
त्रिभङ्ग्या पूजयेन्मन्त्री गुरुपादक्रमावलिम् ॥ ४२ ॥
पराख्या परापराख्यामपराख्या त्रिकात्मिकाम् ।
मुनिवेदनागसख्या गुरोर्ज्ञात्वा समर्चयेत् ॥ ४३ ॥
मायालक्ष्मीबीजयुग्म सर्वमन्त्रेपु चादित ।
सयोज्य पूजयेद् विद्यामुपदेशविधानत ॥ ४४ ॥
अभितोऽङ्गावृं(ति?ती)र्देवीमग्नीशासुरवायुषु ।
देवीमौलौ चतुर्दिक्षु यजेच्छ्रीशम्भुनिर्णयात् ॥ ४५ ॥
बाह्यचक्रेपु योगिन्यस्तदुल्लाससमुद्भवा ।
तद्ध्यानेन समा ध्येया पूजाया साधकोत्तमै ॥ ४६ ॥
प्रकटाश्च तथा गुप्तास्तथा गुप्ततरा परा. ।
सप्रदाया कुलोत्तीर्णा निगर्भाश्च रहस्यका ॥ ४७ ॥
परापररहस्यस्था अतिपूर्वरहस्यका ।
नवधा नामसकेतो योगिनीना विधीयते ॥ ४८ ॥
त्रिपुरा त्रिपुरेशी च सुन्दरी पुरवासिनी ।
श्रीमालिनी च सिद्धाम्बा महात्रिपुरसुन्दरी ॥ ४९ ॥
अत्युपह्वरमेवेद विद्यासकेतसज्ञितम् ।
सत्सप्रदायससिद्धं नवक भुक्तिमुक्तिदम् ॥ ५० ॥
चक्रेश्वरी यजेत् तत्र तत्तच्चक्रार्चनादर्थं ।
पूजाया प्रतिचक्र च मुद्रा सदर्शयेत् क्रमात् ॥ ५१ ॥

१. विद्यानु–रा । २ वृत्ती देवी–ब । ३. सराध्य–ब. । ४ दय –र ।

ह्रीं श्रीं अणिमासिद्धिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं लघिमासिद्धिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं महिमासिद्धिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं ईशित्वसिद्धिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं वशित्वसिद्धिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं प्राकाम्यसिद्धिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं भुक्तिसिद्धिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं इच्छासिद्धिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं प्राप्तिसिद्धिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वकामसिद्धिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं ब्रह्माणीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं माहेश्वरीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं कौमारीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं वैष्णवीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं वाराहीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं इन्द्राणीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं चामुण्डाश्रीपादुकां पूजयामि ।
ह्रीं श्रीं महालक्ष्मीश्रीपादुकां पूजयामि ।

चतुष्कमादितः पूज्यं द्वारदक्षिणभागतः ।
यथाक्रमं पश्चिमादिचतुष्कं च तथा पुनः ॥ ५२ ॥
वायुदिङ्नादितः पूज्यं द्वयमन्तेऽग्निकोणतः ।
ब्राह्म्यादिरौम्यभागेषु दिक्षु चाष्टसु पूजयेत् ॥ ५३ ॥

अं कामाकर्षिणीनित्याकलाश्रीपादुकां पूजयामि ।
आं बुद्ध्याकर्षिणीनित्याकलाश्रीपादुकां पूजयामि ।

---

१. ह्रीं श्रीं इति रूप पाठः सर्वत्र-ग. । २. भक्ता-ग. । ३. नैर्ऋत्य-ग. । ४ सौम्यभागेषु-ग. ।

इ अहङ्कारार्कर्षिणीनित्याकलाश्रीपादुका पूजयामि ।
ई शब्दाकर्षिणीनित्याकलाश्रीपादुका पूजयामि ।
उ स्पर्शाकर्षिणीनित्याकलाश्रीपादुका पूजयामि ।
ऊ रूपाकर्षिणीनित्याकलाश्रीपादुका पूजयामि ।
ऋ रसाकर्षिणीनित्याकलाश्रीपादुका पूजयामि ।
ॠ गन्धाकर्षिणीनित्याकलाश्रीपादुका पूजयामि ।
ऌ चित्ताकर्षिणीनित्याकलाश्रीपादुका पूजयामि ।
ॡ धैर्याकर्षिणीनित्याकलाश्रीपादुका पूजयामि ।
ए स्मृत्याकर्षिणीनित्याकलाश्रीपादुका पूजयामि ।
ऐ नामाकर्षिणीनित्याकलाश्रीपादुका पूजयामि ।
ओ बीजाकर्षिणीनित्याकलाश्रीपादुका पूजयामि ।
औ आत्माकर्षिणीनित्याकलाश्रीपादुका पूजयामि ।
अं अमृताकर्षिणीनित्याकलाश्रीपादुका पूजयामि ।
अः शरीराकर्षिणीनित्याकलाश्रीपादुका पूजयामि ।

भूपपत्रसरोजान्त पश्चिमाशादलादित ।
विलोमेन यजेदेता क्रमान्नित्या. कला.पुन ॥ ५४ ॥

क ख ग घ ङ अनङ्गकुसुमादेवीश्रीपादुका पूजयामि ।
च छ ज झ ञ अनङ्गमेखलादेवीश्रीपादुका पूजयामि ।
ट ठ ड ढ ण अनङ्गमदनादेवीश्रीपादुका पूजयामि ।
त थ द ध न अनङ्गमदनातुरादेवीश्रीपादुका पूजयामि ।
प फ ब भ म अनङ्गरेखादेवीश्रीपादुका पूजयामि ।
य र ल व अनङ्गवेगिनीदेवीश्रीपादुका पूजयामि ।
शं सं ष ह अनङ्गाङ्कुशादेवीश्रीपादुका पूजयामि ।
ळं क्षं अनङ्गमालिनीदेवीश्रीपादुका पूजयामि ।

चतुष्कं प्रथमं पूज्य पौरस्त्यादिदिशाक्रमात् ।
द्वितीयमग्निकोणादि [1]नागपत्राम्बुजेऽर्चयेत् ॥ ५५ ॥

[2]ह्रीं श्रीं सर्वसंक्षोभिणीशक्तिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वविद्राविणीशक्तिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वाकर्षिणीशक्तिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वाह्लादिनीशक्तिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वसंमोहिनीशक्तिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वस्तम्भिनीशक्तिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वजृम्भिनीशक्तिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्ववशङ्करीशक्तिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वरञ्जिनीशक्तिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वोन्मादिनीशक्तिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वार्थसाधनीशक्तिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं [3]सर्वसम्पत्तिपूरणीशक्तिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वमन्त्रमयीशक्तिश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वद्वन्द्वक्षयङ्करीशक्तिश्रीपादुकां पूजयामि ।

[4]मन्त्रश्रेष्ठे स्थिता एता शक्तय सर्वसिद्धिदा ।
पश्चिमादिक्रमे[5]णैव विलोमेन प्रपूजयेत् ॥ ५६ ॥

सर्वसिद्धिप्रदादेवीश्रीपादुकां पूजयामि ।
सर्वसम्पत्प्रदादेवीश्रीपादुकां पूजयामि ।
[1]सर्वप्रियङ्करीदेवीश्रीपादुकां पूजयामि ।
सर्वमङ्गलकारिणीदेवीश्रीपादुकां पूजयामि ।

---

१. भाग–ख. । २. ह्रीं श्रीं रहित एव पाठ सर्वत्र–ग. । ३. सर्वानामरि–ख. ।
४. मनुश्रेष्ठ–ख । ५ णैता–ख. ।

। एतदनुरोधेन मूले ( १।१७० ) इत्यत्र 'सर्ववशङ्करी' इत्यस्य स्थाने 'सर्वप्रियङ्करी' इति पाठः स्थापनीयः ।

सर्वकामप्रदादेवीश्रीपादुकां पूजयामि ।
सर्वदुःखविमोचिनीदेवीश्रीपादुकां पूजयामि ।
सर्वविघ्ननिवारिणीदेवीश्रीपादुकां पूजयामि ।
सर्वमृत्युप्रशमनीदेवीश्रीपादुकां पूजयामि ।
सर्वाङ्गसुन्दरीदेवीश्रीपादुकां पूजयामि ।
सर्वसौभाग्यदायिनीदेवीश्रीपादुकां पूजयामि ।

पङ्क्त्यश्रेषु स्थिता एता देव्यः सर्वार्थसाधिकाः ।
वारुणीं दिशमाश्रित्य वरिवस्येद् विलोमतः ॥ ५७ ॥

ह्रीं श्रीं सर्वज्ञादेवीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वशक्तिमयीदेवीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वैश्वर्यप्रदादेवीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वज्ञानमयीदेवीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वव्याधिविनाशिनीदेवीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वाधारस्वरूपिणीदेवीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वपापहरादेवीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वानन्दमयीदेवीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वरक्षास्वरूपिणीदेवीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वेप्सितफलप्रदादेवीश्रीपादुकां पूजयामि ।

महाफलप्रदा देव्यो दशान्तर्दिगराश्रयाः ।
पश्चिमाशामवष्टभ्य पूर्ववत् पूजयेदिमाः ॥ ५८ ॥
मध्यचक्रे विलोमेन वशिन्याद्यष्टकं यजेत् ।
पादुकां पूजयामीति (न्यासाऽन्यसे)द् देवीं विशेषतः ॥ ५९ ॥

१. पङ्क्त्यश्रेष्ठ–क., षट्यश्रेष्ठ–ख. । २. सिद्धिदाः–ख. । ३. ह्रीं श्रीं रहितः पाठः सर्वत्र–ख. । ४. पापप्रशमनी–ख. । ५. मध्ये–ख. । ६. सादेशं–क. । ७. 'देवीं' नास्ति–क. ।

द्रा द्री क्लीं ब्लूं स (या रा ला वा सा सर्व)जम्भनेभ्यो बाणेभ्यो नम. ।
(ध थ सर्वंस)मोहनाय धनुषे नम. ।
(आ ह्रीं सर्वं)वशीकरणाय पाशाय नम. ।
क्रो (सर्व)स्तम्भनायाङ्कुशाय नमः ।
महामध्यमहादेवीषडङ्गावरणाद् बहि ।
पश्चिमादिचतुर्दिक्षु यजेद् बाणाद्यमायुधम् ॥ ६० ॥

वाग्भवमुखार्याग्निचक्रे कामगिरिपीठे मित्रीशनाथात्मके कामेश्वरीदेवीरुद्रात्मशक्तिश्रीपादुकां पूजयामि ।

कामराजमुचार्यं सूर्यचक्रे जालन्धरपीठे षष्ठीशनाथात्मके वज्रेश्वरीदेवीविष्ण्वात्मशक्तिश्रीपादुकां पूजयामि ।

शक्तिबीजमुचार्य सोमचक्रे पूर्णगिरिपीठे ओड्याणनाथात्मके भगमालिनीदेवीब्रह्मात्मशक्तिश्रीपादुकां पूजयामि ।

श्रीमूलमुचार्य ब्रह्मचक्रे ओड्याणपीठे चर्यानाथात्मके श्रीमहात्रिपुरसुन्दरीदेवीपरब्रह्मात्मशक्तिश्रीपादुकां पूजयामि ।

कामेश्वर्यादिका एता अग्रदक्षोत्तरोदरे ।
वा(का[1]का)मशक्तिबीजाना व्यस्ताव्यस्तमुखा[2] यजेत् ॥ ६१ ॥

पूर्ववद् धूपदीपौ च मुद्रा[3]. कारणतर्पणम् ।
नैवेद्य सघृतं दद्यात् सितापूपादिसयुतम् ॥ ६२ ॥

वरिवस्या विधायेत्थ संजप[4] सहुतक्रियम् ।
सह कामकलाध्यान सौभाग्यहृदय स्मरेत्[5] ॥ ६३ ॥

[6]मण्डल चतुरश्रं च सवृत्त वामभागत. ।
विधाय मनुनाऽनेन सपुष्प तत्समर्पयेत्[7] ॥ ६४ ॥

---

१. जाभा–क. । २. मुख–ख. । ३ नैवेद्य सघृत तत । सितापूपादिसयुक्त दद्यान्मुद्राश्च दर्पणम् ॥–ख. । ४. विद्या जप्त्वा समर्च्य तत्–ख. । ५. पठेत्–ख. । ६. 'मण्डल · हूं स्वाहा' इत्येष पाठ पूर्वं ४४ श्लोकानन्तर स्थापित–ख. । ७. समर्चयेत्–ख. ।

ऐं व्यापकमण्डलाय ऐं।

अर्घान्निपूर्णसलिलं स्थापयेत् तत्र भाजनम्।
त्रिधा पठन् कलावर्णमनुं दद्याद् बलिं ततः ॥ ६५ ॥
ॐ ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हूं स्वाहा।
बद्ध्वा तु खेचरीमुद्रां क्षमस्वेति प्ररोचयेत्।
यथोपदेशं प्रणमेद् गुरुभक्तिभरानतः ॥ ६६ ॥
[1]मूलोद्भवं शक्तिचक्रं यतस्तन्मयतां गतम्।
तस्मिन्नेवाव्यये तत्त्वे विलीनं तद्विभावयेत् ॥ ६७ ॥
[2]मूलं स्वात्मनि चिद्रूपे यजेद्यत्तत्तदेव हि।
पुष्पादिकं समाघ्राय शुचौ देशेऽप्सु वा त्यजेत् ॥ ६८ ॥
[3]पराहन्तामये संविदग्नौ सर्वेंद्रियतर्पणे।
इदन्तालक्षणं हव्यं जुहुयादवहिर्मुखः ॥ ६९ ॥
एतद्विद्याचिरक्लिष्टैः शिष्यैरभ्यर्थितो भृशम्।
शिवानन्दमहायोगी सुभगोदयमब्रवीत् ॥ ७० ॥
मन्त्राः शतं समुद्दिष्टाश्चतुस्त्रिंशदधिश्रियः।
सारवन्तीह सूत्राणि सप्तति सुभगोदये ॥ ७१ ॥
प्रसृता भारतीज्योत्स्ना शिवानन्देन्दुमण्डलात्।
कुदेशिकमहाधर्मसन्तप्तैः सेव्यतां चिरम् ॥ ७२ ॥

इति शिवानन्दमुनिविरचितः सुभगोदयः समाप्तः ॥

१. पात्रि–दी.। २ परि–दी। ३. मद्यज्य त–ख.। ४. सपेत–ख। ५. तर्पणम्–क. ख।

1. एष श्लोको योगिनीहृदयदीपिकायाम् (पृ० ६९, ३३८) उद्धृतो दृश्यते।
2 पङ्क्तिरेषोद्धृता दृश्यते तत्रैव (पृ० ६९)।
3 महार्थमञ्जरीपरिमले (पृ० १३२) समुद्धृत एष श्लोकः।

# सुभगोदयवासना

## शिवानन्दमुनिविरचिता

[1]पराभूजन्मपश्यन्तीवेल्लीगुच्छसमुद्भवा ।
मध्यमासौरभा[2] वैखर्यक्षमाला जयत्यसौ[3] ॥ १ ॥

समस्तसम्पत्सम्पूर्णभोगमोक्षफलाप्तये ।
ध्यानामृतमयं नौमि गुरुं संविन्मयं शिवम् ॥ २ ॥

पूर्णप्रमातृ(सं?ता)सिद्ध्यै संकोचानां च शान्तये ।
चि[4]दानन्दम(ही?हा)सारां विद्यामात्मीकरोम्यहम् ॥ ३ ॥

चिद्रसाच्छामृताम्भोधिलहरी(तस्य?रस)शीकरैः ।
आर्द्रीकृतसमस्ताङ्गो विदधे स्नानमुत्तमम् ॥ ४ ॥

अशेषकर्मानुष्ठानयोग्यताप्रतिपादिनीम् ।
सन्ध्यामुपासे शिवयोः सामरस्यपदं शिवाम् ॥ ५ ॥

कालचक्रमयीमेतामन्तस्तपनमण्डले ।
तोयाञ्जलिप्रदानेन प्र(ण?णौ)म्यात्माम्बिकामहम् ॥ ६ ॥

विहितप्रतिपिद्धात्मविकल्पपदपातनम् ।
सिद्धिरत्नाकरं क्षेत्रं यजनस्थानमाश्रये ॥ ७ ॥

भूपानुलेपतिलकमालावस्त्राञ्जनादिभिः ।
अलङ्करोम्यहं देहं संवित्पीठमनुत्तमम् ॥ ८ ॥

अहन्तेदन्तयोर्बीजमविभागरसात्मकम् ।
शिवशक्तिमयं चक्रं विश्वाकारं भजाम्यहम् ॥ ९ ॥

---

१. पल्लीगुच्छ—क. । २. सौभरी—क. । ३. स्वगा—क. । ४. चिदनन्त—क. ।

1. चिद्वल्ल्यां (पृ० ४१) समुद्धृत एव श्लोकः । 'परा भूजन्म' इत्येवमादिश्लोकगमतः पाठोऽनुचितस्तत्रत्यः ।

अयं वैश्वम्भरो भागो देव्याश्चक्रात्मना स्फुरन् ।
शरीर स्थूलमेवेद भावयामि मुखाद् गुरो ॥ १० ॥
[1]सोमसूर्यकृशान्वात्मतेजस्त्रितयरूपकम् ।
नेत्रत्रय भावयामि वृत्तत्रितयमञ्जसा ॥ ११ ॥
[2]षोडशच्छदपद्मोऽस्य भागो भूताक्षमानसम् ।
विकारात्मकतापन्नं देव्या. स[2]भावयाम्यहम् ॥ १२ ॥
[3]वसुच्छदनपद्माङ्क[3]दलोऽस्य चक्र[4]गो विभु. ।
अव्यक्ताद्या. प्रकृतयो भू[5]तान्ता निश्चिनोम्यहम् ॥ १३ ॥
[4]चतुर्दशारधरणी करणानि चतुर्दश ।
[7]चतुर्दशशिवारण्य महादेव्या. स्मराम्यहम् ॥ १४ ॥
[5]बाह्यो दशारभागोऽस्य बुद्धिकर्माक्षगो[8]चर. ।
मण्डलात्माभिमानि(न्यो?न्या) देव्या. सकल्पयाम्यहम् ॥ १५ ॥
[6]अन्तर्दशारवसुधा बु[9]द्धिकर्मेन्द्रियावलि. ।
महात्रिपुरसुन्दर्या इति सचिन्तयाम्यहम् ॥ १६ ॥
[7]अ[10]ष्टारा[11]शप्रदेशोऽस्य चि[12]न्निर्वाणपणादिकम् ।
[13]सूक्ष्म पुर्यष्टक देव्या मतिरेषा हि गौरवी ॥ १७ ॥

---

१. षोत्य भोग–चि., षाङ्कदेशो–दी. । २. सक्ल्प–क. । ३. क्ङ्को देशो–क, क्ङ्कदेशो पद्म–दी. । ४. चक्को–चि । ५ भूताशा–क. भूतानां–चि. । ६. वसुधा–दी., सरणी–चि. । ७ चक्ररूपशिवारण्या–क. । ८. गोचरा( )–क. । ९. ज्ञानकर्मेन्द्रियाणि च–दी. । १०. ष्टारव्यपदे–दी. । ११. प्रवेशो–चि. । १२. र्णिवणकादि–क., र्णणेषु सादि–चि. । १३. सूक्ष्मक्षण–क., सूक्ष्मपुर्यष्टक–चि. ।

1 चिद्वल्ल्यां ( पृ० ५३ ) समुद्धृत एव श्लोकः ।

2 चिद्वल्ल्यां ( पृ० ६४ ) योगिनीहृदयदीपिकायां ( पृ० ६८ ) च दृश्यते श्लोक ।

3 चिद्वल्ल्यां ( पृ० ६३ ) योगिनीहृदयदीपिकायां ( पृ० ६८ ) च वर्तते श्लोक ।

4 चिद्वल्ल्यां ( पृ० ६२ ) दृश्यते सम्पूर्णं श्लोक, योगिनीहृदयदीपिकायां ( पृ० ६८ ) तु पूर्वार्धमात्रमेव ।

5 श्लोकार्धश्चिद्वल्ल्यां ( पृ० ६१ ) दीपिकायां ( पृ० ६८ ) च द्रष्टव्य ।

6 श्लोक एव दीपिकायां ( पृ० ६८ ) दृश्यते ।

7 चिद्वल्ल्यां ( पृ० ६० ) दीपिकायां ( पृ० ६८ ) च दृश्यते श्लोक ।

[1]इच्छादिशक्तित्रितयं पशोः सत्त्वादिसंज्ञकम् ।
[2]महत्त्रयश्रं चिन्तयामि गुरुवक्त्रादनुस्मरात् ॥ १८ ॥

[3]महामध्यं च चक्रस्य महानन्दात्मकं पुनः ।
अनुत्तरविमर्शैकसारं संविन्मयं भजे ॥ १९ ॥

विभाव्यैवं चक्रगति भूयो भूयो विमृश्य च ।
विद्यां करोमि च पुनः समस्तव्यस्तपूजया ॥ २० ॥

[4]संवित्सतत्त्वनैर्मल्यसिद्धये शोषणादिकम् ।
विकल्पसार्वभौमस्य शरीरस्याश्रयाम्यहम् ॥ २१ ॥

आनीय (संऽसां)विदं वेद्यं तदेकीकरणात्मकम् ।
प्राणसंयमनं कुर्वन् वेद्योपशममारभे ॥ २२ ॥

[5]पातालादिपु लोकेपु ये विघ्ना भेदलक्षणाः ।
ददामि तालत्रित(यासऽयं त)त्रि राकृतिसत्फलम् ॥ २३ ॥

[6]कारणात्मपरामृष्टकार्यभूताङ्गुलिस्थितिम् ।
करोमि चिन्मयीं शुद्धिं करयोः परिशोधिनीम् ॥ २४ ॥

भावराशिमशेषेण चिद्रूपाणां शिवात्मनाम् ।
चतुर्णामर्चकादीनां विदधाम्यासनं क्रमात् ॥ २५ ॥

---

१. सयपशो–क. । २. भावयामि–दी. वि. । ३. तरस्–वि. । ४. सम–क. । ५. भजेत्–क. । ६. कार्यभूतान् भुवि स्थितिः–क. । ७. स्पर्शशोधिनीम्–क. दी. ।

1. चिद्वल्ल्यां ( पृ० ४३ ) दीपिकायां ( पृ० ६८ ) चोद्धृतः श्लोकः ।
2. 'महत्त्रयं······महानन्दात्मकं' कपुस्तके न दृश्यते, दीपिका(पृ० ६८)चिद्वल्ली( पृ०४३, ७१ )-दृष्ट एषोंऽशस्तत्र त्रुटित इति प्रतीयते, 'पुनः' इत्यन्तिमस्य पदस्य तत्रोपलम्भेः ।
3. चिद्वल्ल्यां ( पृ० ७१ ) समुद्धृत एष श्लोकः ।
4. महार्थमञ्जरीपरिमले ( पृ० ११५ ) श्लोकोऽयं दृश्यते । श्लोकस्याभिप्रायस्तत्रैवावलोकनीयः ।
5. दीपिकायां ( पृ० २४७ ) दृश्यते श्लोकार्धः ।
6. दीपिकायां स्थलद्वये ( पृ० २३७, २८० ) महार्थमञ्जरीपरिमले ( पृ० ११७ ) च श्लोक एव दृश्यते ।

[1]सर्वज्ञत्वादिशक्तीनां सतीनामात्मनि प्रभौ ।
उन्मज्जनं भावयामि षडङ्गविधियोगतः ॥ २६ ॥
मातृकावर्गसंयुक्तवशिन्याद्यष्टकस्मृतेः ।
विमृशामि महाहन्ता परिपूर्णचिदात्मिकाम् ॥ २७ ॥
कल्पयामि च सामान्यमर्घ्यं सर्वविशोधनम् ।
चिद्रसप्रायममृतं सिद्धिदं कल्मषापहम् ॥ २८ ॥
शिवशक्त्यात्मषट्कोणसामरस्यत्रिकोणकम् ।
संविद्रूपमहादर्शं करोम्येतेन मण्डलम् ॥ २९ ॥
मातृमानप्रमेयात्मपावकेनेन्दुविग्रहम्[2] ।
आधारपात्रपीयूषं सन्दधेऽहमनुक्रमात् ॥ ३० ॥
कलासनविमर्शेन विशेषा(र्घ्यं?र्घ्यं) चिदात्मकम् ।
भावयामि भवप्राप्तिसाधनं भवभेषजम् ॥ ३१ ॥
अर्घ्योदाभ्युक्षणेनैव देहपुष्पस्थ(या?ला)दिकम् ।
सविदम्भोधिलहरीरसेनार्द्रीकरोम्यहम् ॥ ३२ ॥
स्वात्मानन्दचमत्कारं परितृप्तिप्रयोजनम् ।
समाधि समतासारं सम्यगङ्गीकरोम्यहम् ॥ ३३ ॥
स्वातन्त्र्योल्लासि(का?ता)शेषतत्त्वव्रातविजृम्भितम् ।
सवित्तत्त्वं महाहन्तासार ध्यायामि शीतलम् ॥ ३४ ॥
[3]ज्ञानक्रिया(स्त?स)तत्वेन मन्त्रमुद्राक्रमेण तु ।
आवाहयामि हृदयाद्बहिः संवित्कला निजाम् ॥ ३५ ॥
[4]घृतकाठिन्यव[३]च्चक्रमहायोनौ चिदम्बरम् ।
द्रुतहेमघनीभा(व इ?वमि)व मूर्तीकरोम्यहम् ॥ ३६ ॥

१. घृतकाठिन्य–क. । २. च्चक्र–दी. । ३. वमिति मूर्ति–दी. ।

1. महार्थमञ्जरीपरिमले ( पृ० ११७ ) समुद्धृत एष श्लोकः ।
2. अग्निरविचन्द्रविग्रहमित्यर्थः । इन. सूर्य. । 'इन सूर्ये प्रभौ' ( ३।३।१११ ) इत्यमरः ।
3. द्रष्टव्यम्—' मन्त्रमुद्राशब्देन ज्ञानक्रिये लिलक्षयिषेते'' ( ऋजु० पृ० ४६ ) इति वचनम् ।
4. दीपिकायां ( पृ० ८६ ) दृश्यते श्लोकः ।

[3]प्रकाशैकघने धाम्नि वि[1]कल्पान् [2]पाशवादिकान् ।
[3]निक्षिपाम्यर्चनद्वारा वह्नाविव घृताहुती. ॥ ३७ ॥
रागद्वेषचरुं पूर्णम(हि?भि)मानावसेचनम् ।
चिरेण मयि संजातमुपहारीकरोम्यहम् ॥ ३८ ॥
[2]प्र[4]दानैस्तर्पणैः सम्यग्विशुद्धैरमृतात्मभि. ।
[5]महाहन्तीकरोमीदं वि[6]श्वं हव्यवपुर्धरम् ॥ ३९ ॥
प्रकाशभरिता(:) [3]कान्तिक्रियासा(र?रा:) शिवात्मिका. ।
ज्ञानक्रियात्मने देव्यै मुद्राः संदर्शयाम्यहम् ॥ ४० ॥
[4][7]खं वायुर्ज्योतिरम्भूमिशब्दादिगुणभेदत. ।
[10]दशपञ्चतया व्याप्ता व्यापिका. पूजयाम्यहम् ॥ ४१ ॥
अनुत्तरादिसर्गान्तबोधचन्द्रकलाश्रिते ।
मध्य(त्रा?त्र्य)श्रे षोडशैता यजेन्नित्या. कला. क्रमात् ॥ ४२ ॥
[5]प्रमातृसप्तके[8]ष्वे(को?कं) विहाय प्रथमं पुनः ।
त्रिकं वारादिभेदेन संश्रये गौरवीं स्थितिम् ॥ ४३ ॥
सर्वज्ञत्वादिका. शक्तीः सेवे संवि(त्त?त्ति)त. परा(:) ।
षडङ्गोपास्तियोगेन गर्भावरणदेवता. ॥ ४४ ॥
[6]चक्रराजे परा[11]मृश्या यो[12]गिन्य. प्रकटादिका. ।
[13]विमर्शाख्याश्चिदम्भोधिलह(री?र्य)स्ता अपि क्रमात् ॥ ४५ ॥

---

१. विकल्पप्रसरादिकान्–दी. । २ प्रस–से. । ३. निक्षिपेत् स्वार्चन–दी. । ४. नैदानै–दी. क. । ५. महाहन्ता–दी., मदहन्ता–दी. । ६. विश्वहव्यधनुर्धरम्–क. । ७. पुर सरम्–दी. । ८. रवते षट्–क. । ९. योगत–क. । १०. दश पञ्च च यान्नित्या व्यापिका यजता भवेत्–क. । ११. मृश्य–चि. । १२. योगिनी–चि. । १३. विमृशामि चिद–क. ।

1. दीपिकाया ( पृ० १९३ ) सेतुबन्धे ( पृ० १९४ ) च वर्तते ।
2. दीपिकाया स्थलद्वये ( पृ० २६४, ३३३ ) समुद्धृत एष श्लोकः ।
3. कान्तिशब्दोऽत्र प्रकाशार्थत्वाज्ज्ञानपरः ।
4. चिद्वल्ल्या ( पृ० ३६ ) समुद्धृत. श्लोक. ।
5. शिव, मन्त्रमहेश्वर, मन्त्रेश्वरः, मन्त्र, विज्ञानाकल, प्रलयाकल, सकल इति सप्त प्रमातारः ।
6. चिद्वल्ल्यां ( पृ० ५६ ) दृश्यते श्लोक. ।

वसुधाभवने दे(वंश्वीं) महाचित्तरुमञ्जरीम् ।
प्रकटाह्वां पूजयामि त्रैलोक्यपरिमोहिनीम् ॥ ४६ ॥
यस्या उल्लसिता एता योगिन्यश्चिद्घनत्विषः ।
[१]चक्रेश्वरीर्भजाम्येता[२]श्चक्रे चक्रे समाहिताः ॥ ४७ ॥
राजच्छदनपद्मस्था गुप्ताह्वाश्चिन्मणिप्रभाः ।
ताः संदधे महाशक्तीः सर्वाशापरिपूरिकाः ॥ ४८ ॥
याश्च गुप्ततराह्वानाः संवित्कौस्तुभदीप्तयः ।
भजे ता वसुपत्राब्जे सर्वसंक्षोभणात्मिकाः ॥ ४९ ॥
चतुर्दशारावरणे या देव्यश्चिन्मधुश्रियः ।
कलाह्वाः पूजयाम्येताः सर्वसौभाग्यदायिकाः ॥ ५० ॥
बाह्यपङ्क्त्यश्चक्रे या वा (देव्य)श्चिच(न्द्र)चन्द्रिकाः ।
सर्वार्थसाधिका एताः कुलोत्तीर्णाह्वया यजे ॥ ५१ ॥
[1]अन्तर्दशारगा दे[३]व्यो विद्युत्पुञ्जनिभाः शुभाः ।
निगर्भाख्या [४]भजाम्येताः सर्वरक्षाविधायिनीः ॥ ५२ ॥
अष्टारे या वशिन्याद्याश्चित्क्षीरस्निग्धताः पराः ।
सर्वरोगहरा एता विमृशामि विशेषतः ॥ ५३ ॥
[2]देव्याः संवित्स[५]त्तत्त्वाया भेद्यो(द्दि[६])लनहेतुकाः ।
आयुधाख्याः पराः शक्तीर्बाणाद्याः पूजयाम्यहम् ॥ ५४ ॥
सर्वानन्दमयी मध्ये महात्रिपुरसुन्दरीम् ।
यजाम्यतिरहस्यां तां महार्चिःस्पन्दधर्मिणीम् ॥ ५५ ॥
विमृशामि महाहन्तां संवित्स्रोतोमहानदीम् ।
[3]जनिपालनधर्मेण जपेनान्तर्मुखात्मना ॥ ५६ ॥

---

१. चक्रेश्वरे–चि. । २. श्चक्र चक्र समाश्रिताः–चि. । ३. देव्यश्चिल्लताप्रकलानि या(ः)–क. । ४. पूजनीयाः–चि. । ५. त्स्वसत्तायाः–चि. । ६. भ्रमन–चि. ।

1. चिद्वल्ल्यां ( पृ० ६१ ) श्लोकोऽयमवलोक्यते ।
2. चिद्वल्ल्यां ( पृ० ५८ ) पद्यमिदमवलोकनीयम् ।
3. महार्थमञ्जरीपरिमले ( पृ० १२८ ) समुद्धृत एष श्लोकार्धः ।

संविन्मये महावह्नौ विमर्शपरमार्चिषि ।
श्रद्धीकरोम्यक्षवृत्तीस्तिला(द्या?ज्या)हुतिकर्मणा(म्?)॥ ५७ ॥
सर्वज्ञत्वादिशक्तीनां संविद्रू(पा?प)विमर्शनम् ।
विलयाङ्गविधानेन विदधामि विधानतः ॥ ५८ ॥
विश्वभेदलयप्रायां महासंवित्त(नूर्ण?नूं नि)जाम् ।
भावयामि महाकामकलाध्यानेन नित्यदा ॥ ५९ ॥
सौभाग्यहृद्विमर्शेन संवित्सर्वात्मभावनाम् ।
तन्मयत्वफलावाप्त्यै करोम्यहमनारतम् ॥ ६० ॥
अर्चास्थानानि मानिन्यै देवतायै चिदात्मने ।
ददामि च बलिव्याजाद् विकल्पा(द्वि?न् वि)घ्न-
(शा?श)व्दि(कात्?तान्)॥ ६१ ॥
कायवाङ्मन(सा?सां) ग्रेयं शिवैकात्म्येन योजना ।
नमस्कृतिं करोम्येतां संविद्रू(पा?प)विमर्शि(नीः?नीम्) ॥ ६२ ॥
इदन्तोल्लासितं हव्यं संविच्चक्रस्य मध्य(म?ग)म् ।
महाहन्तीकरोम्येवं तदिदं च विमृश्यते ॥ ६३ ॥
[1]संविदग्नौ महासारे विमर्शैकशरीरिणि ।
भेदाभासमिदं हव्यं जुहोम्यपुनरुद्भवम् ॥ ६४ ॥
क्रियाशेषमशेषेण विमृशामि चिदात्मकम् ।
पराम(र्शा?र्शः) परा पूजा पवित्रं हि विधीयते ॥ ६५ ॥
ग्रथिता सेयमम्लान(।) संविन्माला मनोहरा ।
महानुभावगन्धाढ्या जुषतां लोकमातरम् ॥ ६६ ॥
इती(वरास्य?रिताऽस्याः) क्रमवासना शुभा विच्छहीनक्रममार्गशोधिनी ।
हिताहितद्वैतपथप्रणाशिनी समस्तसंविन्मयपूर्णचित्तया ॥ ६७ ॥
सुत्राणामपि समत्या सुभगोदयवासना ।
शिवानन्देन रचिता विदुषां प्रह्वतां महत् ॥ ६८ ॥
इति शिवानन्दमुनिविरचिता सुभगोदयवासना समाप्ता ॥

1. दीपिकायां ( पृ० २४८ ) समुद्धृतोऽयं श्लोकः ।

# सौभाग्यहृदयस्तोत्रम्

## शिवानन्दमुनिविरचितम्

[1]तन्मह. परमं नौमि कृत्यैः पञ्चभिरङ्कितम्[1] ।
अशेषविश्वाभेदा[2]त्म पूर्णाहन्तात्मकं शिवम् ॥ १ ॥
[3]त्रिधा विभक्तं यद्वस्तु स्तोतृ[4]स्तुत्यस्तुतिक्रमात् ।
एकस्मै महसे तस्मै नम. स[5]कलचक्षुषे ॥ २ ॥
स्मरामि ता परा वाचं पश्यन्त्यादिक्रमाश्रयाम् ।
नानाविधरसाका[6]रा महानुभवरूपिणीम् ॥ ३ ॥
[2]देशकालपदार्थात्म[7] यद्यद्वस्तु यथा य[8]था ।
तत्तद्रूपेण या भाति तां श्रये संवि[9]दी कला[10]म् ॥ ४ ॥
मूलादिविलपर्यन्तं महात्रिपुरसुन्द(री?रि) ।
या तनुस्ते तडित्प्रख्या ता भ[11]जे भवशातनीम् ॥ ५ ॥
[3]योनौ कनकपु[12]ञ्जाभं हृदि विद्युच्छटोज्ज्वलम् ।
आज्ञाया चन्द्रसकाशं महस्तव महेश्वरि ॥ ६ ॥
[4]प्रसृतामृतरश्म्यौ[13]घसन्तर्पितचराचराम् ।
भवा[14]नि भवशान्त्यै त्वा भावयाम्यमृतेश्वरीम् ॥ ७ ॥

१. रचितम्–क. । २ भेदेन–क. ख. । ३. त्रिविभक्त च–क. ख. । ४. स्तोतृ–क. ख. । ५. परम–ख. । ६. कार–क ख । ७. र्थात्मा–क. ख. दी. । ८. तथा–क. ख. दी. । ९. संविद–क. ख. । १० पराम्–क । ११. वन्दे–ख. । १२. सकाश–क. । १३. श्म्यो–ग. । १४. भवानीं–ख. दी. ।

1 'तन्मह परम नौमि' इत्यशश्चिद्वल्ल्या ( पृ० ५ ) दृश्यते ।
2. दीपिकायां स्पन्दवृत्तौ ( पृ० ५,१७९ ) समुद्धृतोऽयं श्लोक ।
3 महार्थमञ्जरीपरिमले ( पृ० १४५ ) दृश्यते श्लोक ।
4. दीपिकायां ( पृ० २५७ ) दृश्यते श्लोक. ।

[1]वर्णं[१]. कला पदं[२] तत्त्व मन्त्रो[३] भुवनमेव च।
इत्यध्वषट्कं देवेशि भाति त्वयि चिदात्मनि ॥ ८ ॥

अनाश्रितादिकालाग्निरुद्रान्त चिरं[४]मद्भुतम्।
उन्मीलयसि मातस्त्वं प्रकाशवपुषि त्वयि ॥ ९ ॥

यदिदं भासते देवि नामरूपक्रियात्मकम्।
प्रकाशवपुषि[५] त्वत्तस्तत्सर्वं नातिरिच्यते ॥ १० ॥

[2]नेत्रादि[६]जालकोपान्ते हृत्पद्मासनलीलया।
वारं वारं त्वया[७] देवि रूपादिमधु सेव्यते ॥ ११ ॥

संविद्देव्यः समाक्रम्य विषयानमृतासवान्[८]।
योगिना[९] प्रेषयन्त्यार्ये[१०] त्वत्पूजार्थं[११] हि सर्वदा ॥ १२ ॥

सौभाग्यहृदयं गुह्यं[११] शिवानन्देन[१२] योगिना।
समाराधनपूर्त्यर्थं स्तुतं[१३] सकलकामदम् ॥ १३ ॥

इति विरचितमेतत् त्रैपुर स्तोत्रमाप्तं[१४]
प्रकटितपरमार्थं योगिवर्यो[१५]पजुष्टम्।
सकलदुरितरोग[१६]ध्वंसनानन्यकार्यं
प्रतियजनविधान सेव्यता भक्तियुक्तै ॥ १४ ॥

॥ इति शिवानन्दमुनिविरचितं सौभाग्यहृदयस्तोत्रं समाप्तम् ॥



१. वर्णा—क. ख.। २. मनुस्तत्त्व—क. ख.। ३. पद—क. ख.। ४. चिरम—ख. ग.। ५. वपुषस्तत्समास—क. ख.। ६. ज्वाल—क. ख.। ७. मया—ख.। ८. सव —ग.। ९. योगिनो—क.। १०. आर्ये—क.। ११. स्तोत्र—ख.। १२. सर्वा—क., चिदा—ख.। १३. स्मृत—ग.। १४. माद्य—क.। १५. वर्येण—क.। १६. योग—क.।

1 महार्थमञ्जरीपरिमले ( पृ० ७३ ) चिद्वल्ल्यां ( पृ० १८ ) च दृश्यते श्लोकः।
2. महार्थमञ्जरीपरिमले ( पृ० १३ ) उद्धतोऽयं श्लोकः।

# सौभाग्यसुधोदयः

## अमृतानन्दयोगिविरचितः

[1]जयति ज्योतिरनुत्तरमिदमखिलं यस्य भासते भासा ।
सा [2]भासयति यत्र भानुर्न शीतभानुः कुतो बृहद्भानुः ॥ १ ॥

[2]स्वाभाविकी स्फुरत्ता विमर्शरूपा[3]स्य विद्यते शक्तिः ।
सैव चराचरमखिलं जनयति जगदेत[4](व?द)वति संहरते ॥ २ ॥

तस्य निरुपाधिमूर्तेर्निखिलातीतस्य नित्यतृप्तस्य ।
संसारमोहसंभ्रमसंगतिरनयैव सन्तत भवति ॥ ३ ॥

सेयं तदेकरस्यात् परा परामर्शरूपिणी शक्तिः ।
स्वस्वातन्त्र्यो[5]ल्लासस्पन्दादेकाऽप्यनेकधा वितता ॥ ४ ॥

प्रथमं पश्यन्त्यादिप्रकारभेदप्रपञ्चिताकारा ।
वि[6]श्वोत्तीर्णानाहतना[7]दमयी सैव मातृका जाता ॥ ५ ॥

अखिलमनाहतमूर्तिमत्युत्तीर्णस्वरूपिणी तरति ।
[3][8]कायति नानानामप्रपञ्चरूपेण मातृका देवी ॥ ६ ॥

---

१. एषा पङ्क्तिर्न दृश्यते—क. ख. । २ जयति—ग. । ३. स्वात्म—ती. । ४. देतदपि च सहरति—ग. मी. । ५. न्त्र्येणोल्ल—ग. । ६. 'विश्व' नास्ति—ग. । ७. नामवती—ग. । ८. पङ्क्तिचतुष्टय न दृश्यते—क ख. ।

1. "यत्र तेजांसि तेजांसि तमांसि च तमांसि च । तेजांस्येव तमांस्येतद्वरदज्यो · ॥" इति प्रथम श्लोक—ग., अत्र पद्वितीयपङ्क्तिस्थाने—'तस्मै यत्यनुत्तरे" इति दृश्यते—ख. । यम्तुनन्तु—"यत्र तेजांसि तेजांसि तमांसि च तमस्यलम् । तेजांसि च तमांस्येतद्वन्दे ज्योतिरनुत्तरम् ॥" इत्यनितरगुणरूपरार्थोपलक्षणानुवृत्तिमङ्गलाचरणश्लोक एव विवृतरूपेणात्र दृश्यते ।

2. सौभाग्यभास्करे ललितासहस्रनामभाष्ये (पृ० १२२) उद्धृतो दृश्यत एव श्लोकः ।

3. श्लोकार्धो यागिनीहृदयदीपिकाया (पृ० १०६) दृश्यते ।

निजभागाद्विभागा(?) पर्यासिसमासैकरस्यभेदम(यि?यी)।
एकाऽप्येकादश(वा?धा) जाता माता परैव पश्यन्ती ॥ ७ ॥
[ [1]पश्यति सर्वं स्वात्मनि करणाना सरणिमपि यदुत्तीर्णा ।
तेनेयं पश्यन्तीत्युत्तीर्णेत्यप्युदीर्यते माता ॥ ]
पश्यन्त्य(ा) परमार्थं स्व(ा)वयवा (प्या?था)द्वयोऽद्वामा(सा?धाः) ।
ताभ्य समष्टिरूपे न सामरस्य च तत्त्वतो भिन्नम् ॥ ८ ॥
एकैकरस्यरूपा परा[2]ऽपराऽद्वाशमातृपरमार्थौ ।
ताभ्यामनाहताख्या नादमयी मध्यमाऽभवन्माता ॥ ९ ॥
स्थानादिभिरहतत्वाद् बुद्धिव्यापारमात्रबोध्यत्वात् ।
माताऽनाहतनामा सूक्ष्मा विकृतादिनादनवकमयी ॥१०॥
सूक्ष्मैव म[3]ध्यमेय नादमयी स्थूलभावमापन्ना ।
[4]द्व्युत्तरचत्वारिंशद्वर्णात्मिकवर्गनवकरूपेण ॥ ११ ॥
[2]पश्यन्तीव न केवलमुत्तीर्णा नापि वैखरीव बहिः ।
स्फुटतरनिखिलावयवा म[5]ध्यगता मध्यमा तयो(र?र्य)स्मात ॥ १२ ॥
परयाऽपरया पादार्ध[6]ष्ट्यष्टचात्मना च पश्यन्त्या ।
माता मध्यमया नववर्गात्मिकया च वैखरी जाता ॥ १३ ॥
स्थानकरणप्रयत्नैरभिहतपवनप्रवर्तितार्णत्वात् ।
हतनामधेयमस्या विहित वर्णोदयक्रमाभिज्ञैः ॥ १४ ॥

---

१. 'ताभ्य ' सामरस्य' नास्ति—क.ख. । २. पर.स्ताशमात्र—ग.। ३. मध्यमया—ख. ।
४. द्वयतर—क. ख. । ५ धापूपा—क. ख. सौ.। ६ ष्टकमव्य—ग. ख.।

1 [ ] चिह्नस्थ. श्लोक सौभाग्यभास्करे (पृ० १००) सौभाग्यसुधोदयश्लोकत्वेनोद्धृत प्रकरणानुरोधादत्र स्थापित, मातृकासु तु नोपलभ्यते ।
2 सौभाग्यभास्करे (पृ० १००) उद्धृतो दृश्यते श्लोक ।

[1]अवधारणे(द्र?न) वै (वे?चे)दमक्षे विवरे च ख गतौ रौति ।
कर्णविवरैकगम्यस्वार्णेय वैखरी यतो माता ॥१५॥
दश पञ्च च बिन्द्वन्ता स्वरा मता प्रतिपदादितिथिरूपा ।
रविशशिसर्गस्पन्दप्रभवा हि भवन्ति ते तदात्मान ॥१६॥
रविशशिरूपौ बिन्दू शिवशक्तिमयौ तदात्मक सर्ग. ।
सत्त्वोद्रेकश्च तयो शिवशक्त्योस्तत्स्वभावतोऽवस्थे ॥१७॥
सत्ता शिवस्तदशा वामा ज्येष्ठा तथैव रौद्री स्यात् ।
एता एवानुत्तरमिच्छोन्मेषश्च समभव(द्?न्) ह्रस्वा. ॥१८॥
उद्रेक [१]शक्ति. स्यादिच्छा [२]ज्ञाना क्रिया च शक्त्यशा. ।
दीर्घास्ता एवासद्यानन्दश्चेशनोनता चेति ॥१९॥
अस्वरवपुरादिशिव [३]परे प्रमाता स्वसविदुन्मेषात् ।
इच्छति वेदितुमर्थानीशनया तदनु वेत्ति भिन्नगति ॥२०॥
[४]ईच्छावेशानन्तरमस्मिन् प्रागीशनोदयान्मध्ये ।
व्यक्ताव्यक्तार्थमया( ) षण्ढा इच्छेशनोद्भवा वर्णा ॥२१॥
इच्छानुत्तरयोगाद्विहिता श(क्तिः क्ति)स्वरस्य सभूति ।
एकारानुत्तरयो सङ्गादैकारसभवो भवति ॥२२॥
उन्मेषानुत्तरयो सङ्गादोकारजन्म निर्णीतम् ।
औकारानुत्तरयो सङ्गाच्छक्तिनिशूलनिष्पत्ति ॥२३॥
वेदनरूपो बिन्दु शिवशक्तिद्वितयसामरस्यतनु. ।
[५]वेदकवेद्यविभागस्वरूपसकोचरूपसस्कार. ॥२४॥

---

१. शाक्त्यशा –क. ख. । २. ज्ञान–क. ख. । ३. परप्रमाता–ग. । ४. पङ्क्तित्रय नास्ति–ख. । ५. पङ्क्तित्रय नास्ति–ख. ।

1. "वै निश्चयेन स कर्णविवर राति गच्छतीति व्युत्पत्ति सौभाग्यसुधोदये कथिता" ( सौभाग्यभास्करे, पृ० १०० ) । "अनुत्तराद्यादिशयत्येच्छाशक्त्या योगादिक्रमेण वर्णोत्पत्तिप्रकार सौभाग्यसुधोदये द्रष्टव्य" ( सौभाग्यभास्करे, पृ० १२५ ) । "एवमन्येषां वर्णानामुत्पत्ति परापञ्चाशिकासौभाग्यसुधोदयादिषु वर्णितानुसन्धेया' ( सेतुबन्धे, पृ० २९१ ) ।

रविशशिसंचरणवशाद् यथैव विकसन्ति सन्ततं तिथयः ।
तन्मयसर्गस्पन्दादुन्मिषितास्ते स्वरास्तदात्मानः ॥२५॥
सर्गेण कादिवर्णैरपि षट्त्रिंशद्भिरात्मनोऽवयवैः ।
षट्त्रिंशतत्वमयं जगदावृणुते शिवात्मकं माता ॥२६॥
शक्तिर्न शिवेन विना शिवोऽपि न तया विनाऽस्ति तद्वदिदम् ।
विश्वं वागर्थमयं शिवशक्त्युल्लाससंभवं भाति ॥२७॥
[1]यदयमनुत्तरमूर्तिर्निजेच्छया निखिलमपि जगत्स्रष्टुम् ।
प[1]स्पन्दे स स्प[2]न्दः प्रथमं शिवतत्वमुच्यते तज्ज्ञैः ॥२८॥
इच्छा सैव स्वच्छा सन्ततसमवायिनी प[3]रा शक्तिः ।
सचराचरस्य जगतो बीजं निखिलस्य निजनि[4]लीनस्य ॥२९॥
स्वेच्छाशक्त्युद्गीर्णं जगदात्माहन्तया समाच्छाद्य ।
निवसन् स एव निखिलानुग्रहनिरतः सदाशिवोऽभिमतः ॥३०॥
विश्वं स एव पश्यन्निदन्तया निखिलमीश्वरो जातः ।
सा भ[5]वति शुद्धविद्या येदन्ताहन्तयोरभेदमतिः ॥३१॥
माया वि[6]भेदबुद्धिर्निजांशभूतेषु निखिलभूतेषु ।
नित्यं तस्य निरङ्कुशविभवं वेलेव वा[7]रिधिं रुन्धे ॥३२॥
स तया परिमितमूर्तिः संकुचितसमस्तशक्तिरेष पुमान् ।
रविरिव सन्ध्यारक्तः संहृतरश्मिः स्वभासने[8]ऽप्यपटुः ॥३३॥
सम्पूर्णकर्तृताद्या या बह्वय. सन्ति शक्तयस्तस्य ।
संकोचात् संकुचिताः कलादिरूपेण रूपयन्त्ये[9]नम् ॥३४॥
य[10]त्सर्वकर्तृता सा संकुचिता कतिपयार्थमातृपरा ।
किञ्चित्कर्तारममुं कलयन्ती कीर्त्यते कलाना[11]म्ना ॥३५॥

---

१. प्रस्पन्दे–क. ख. । २. स्पन्द –क. ख. । ३. सती–ग. दी. । ४. विली–दी. । ५. भाति–दी. । ६. पि भेद–क. ख. ग. । ७. वारिधे–ग. । ८. शशि–ग. । ९. नेऽय–दी. । १०. तत्–ग. दी. । ११. नाम–ग. ।

1. यदयमित्यादिका गन्धवतीत्यन्ताः श्लोका योगिनीहृदयदीपिकायां ( पृ० १२४-१२६ ) समुद्धृताः सन्ति ।

सर्वज्ञताऽस्य शक्तिः परिमिततनुरल्पवेद्यमात्रपरा ।
[1]ज्ञानमुपपादयन्ती विद्येति निगद्यते बुधैराद्यैः ॥३६॥

नित्यपरिपूर्णतृप्तिः शक्तिस्तस्यैव परिमिता तु सती ।
भोगेषु रञ्जयन्ती सततममुं रागतत्त्वतां याता ॥३७॥

या नित्यताऽस्य शक्तिर्निकृष्य निधनोदयप्रदानेन ।
[2]नियतपरिच्छेदकरी क[3]लैसा स्यात् कालतत्त्वरूपेण ॥३८॥

याऽस्य स्वतन्त्रताख्या शक्तिः संकोचशालिनी सैव ।
कृत्याकृत्येष्ववशं नियतममुं नियमयन्त्यभून्नियतिः ॥३९॥

इच्छादित्रिसम[4]ष्टिः शक्तिः शा[5]न्ताऽस्य सङ्कुचद्रूपा ।
सङ्कुचितेच्छाद्यात्मकसत्त्वादिकसाम्यरूपिणी तु सती ॥४०॥

बुद्ध्यादिसामरस्यरू[6]पा चित्तात्मिका मता प्रकृतिः ।
इच्छाऽस्य रजोरूपाऽहङ्कृतिरासीदहम्प्रतीतिकरी ॥४१॥

ज्ञानाऽस्य सत्त्वरूपा निर्णयबोधस्य कारणं बुद्धिः ।
तस्य क्रिया तमोमयमूर्तिर्मन इत्युच्यते विकल्पकरी ॥४२॥

[7]रागादिपञ्चभेदः स एव सङ्कुचितविग्रहो देवः ।
ज्ञानक्रियोपरागप्राधान्याद् विविधविषयरूपोऽभूत् ॥४३॥

श्रोत्रं चक्षुः स्पर्शनजिह्वाघ्राणानि बोधकरणानि ।
वाक्पाणिपादपायूपस्थाख्याकानि कर्मकरणानि ॥४४॥

शब्दस्पर्शौ रूपं रसगन्धौ चेति भूतसूक्ष्माणि ।
अयमेवातिनि[8]कृष्टो जातो भूतात्मनाऽपि भूतेशः ॥४५॥

गगनमनिलश्च तेजः सलिलं भूमिश्च पञ्च भूतानि ।
श्रोत्रादिकरणवेद्याः शब्दाद्यास्तानि वेदकान्येषाम् ॥४६॥

---

१. उत्पादयति ज्ञान-क. ख. । २ नियतिः-ग. । ३ तृप्ता-ग । ४. समष्टिशक्तिः-क. ख. टी । ५. शान्तस्य-ग. । ६. स्वरूप-ग टी. । ७ वामादि-ग. । ८. निष्कृष्टो-ग. ।

वचनकरी वा[1]गासीत् पाणि. स्यात् करणभूतमादाने ।
गमनविसर्गानन्दत्रितये पा[2]दादिकत्रिक करणम् ॥४७॥
गन्धवती भूमि. स्यादाप. सांसिद्धिकद्रवास्तेज. ।
उष्णस्पर्शविशिष्टं[3] सस्पर्शो वायुरम्बर शब्द. ॥४८॥
[1]मायान्तमात्मतत्त्व विद्यातत्त्वं सदाशिवान्तं स्यात् ।
श[4]क्तिशिवौ शिवतत्त्वं तुरीयतत्त्वं समष्टिरेतेषाम् ॥४९॥
[5]चतुरात्मिकेयमेषा परादि[6]रूपप्रपञ्चभेदवती ।
सृष्टिस्थितिसंहारानाख्याख्या[7]श्चतुरोऽन्वयानभिव्याप्ता ॥५०॥

इति श्रीमदमृतानन्दयोगिविरचिते[8] सौभाग्यसुधोदये
प्रथमः प्रपञ्चः ॥

[2]सैव महाविद्यात्मा माता चतुरन्वयैकविश्रान्ति ।
चतुराननादिजननी जाता चतुरात्मवर्गफलदात्री ॥ १ ॥
[3]अस्वरविमर्शरूपौ स्वांशौ हित्वा चतुष्कलौ सैव ।
वामादीच्छादिमयान्यकरोद् द्वन्द्वान्यमूनि चत्वारि ॥ २ ॥
वामांशो ब्रह्मा स्यादिच्छैव तस्य भारती शक्ति. ।
अनयोरेतन्मिथुनं सृष्टिः प्रा[10]गन्वयात्म वाग्बीजम् ॥ ३ ॥
ज्येष्ठांशो विष्णु स्याज्ज्ञा[11]ना विश्वम्भरा तयोर्मिथुनम् ।
इदमेव दक्षिणान्वयरूप श्रीकामराजमध्यास्ते ॥ ४ ॥

---

१. घागुत्ता–ग. । २. पादादिक–दी. । ३. मह्प –ग., मह्पस्पर्शो–दी. । ४. शवरयन्त–ग. । ५. चातु–ग. । ६. भेद–क. ख. । ७. ख्यार्णान् चतुर–क. ख. । ८. इत्यमृतानन्दकृते–क. ख. । ९. घान्ति –ग. । १०. प्राग् वाग्भवात्मक बीजम्–क. ख. दी । ११. स्याज्ज्ञान–क. ख. दी. ।

1. सेतुबन्धे ( पृ० १२८ ) दृश्यते श्लोक एव । "एतेषां ( ३६ तत्त्वानां ) स्वरूपमुत्पत्तिक्रमश्च सौभाग्यसुधोदये द्रष्टव्य." (पृ० ६८) इति वरिवस्यारहस्ये, तदस्यैव प्रकरणस्य परामर्शकम् ।
2. द्वितीयप्रपञ्चस्था सर्वे श्लोका योगिनीहृदयदीपिकायां ( पृ० १००-१०२ ) दृश्यन्ते ।
3. एष श्लोकार्धो योगिनीहृदयदीपिकायां १७१ तमे पृष्ठेऽपि दृश्यते ।

रौद्र्यात्मकस्तु रुद्र क्रियामयी शक्तिरस्य रुद्राणी ।
युगलमिदं तार्तीयं बीजं पालयति पश्चिमाम्नायम् ॥ ५ ॥

स्यादम्बिकास्वरूप शम्भु शान्तात्मिकाऽस्य शक्ति स्यात् ।
मिथुनमिदं शिवशक्त्योरुत्तरसमयात्म तुर्यमधितिष्ठेत् ॥ ६ ॥

एवमनुत्तरशक्त्योश्चतुरशद्वन्द्वरूपिणौ जाता ।
चतुरन्वयात्मिकेयं पश्यन्ती मातृकामयी विद्या ॥ ७ ॥

सृष्टि पूर्वाम्नायो वाग्भवबीज तदात्मक त्रिविधम् ।
सृष्टिस्थितिसहारैर्भिन्ना सृष्टिस्त्रिमूर्तिमूर्ति स्यात् ॥ ८ ॥

ब्रह्माऽत्र सृष्टिसृष्टावधिपतिरेतस्य भारती शक्ति ।
सोऽस्य हस्यार्थं स्यात् स एव शिवशक्तिवाचकश्चापि ॥ ९ ॥

हस्यार्थे स्यादत्र स्वशक्तिमयरूपसार्णसयोगात् ।
सृष्टिस्थितौ तु विष्णु कर्ता विश्वम्भराऽस्य शक्ति स्यात् ॥ १० ॥

विष्णु. कलिपेरर्थो ललिपेरेतस्य शक्तिरर्थं स्यात् ।
रुद्रोऽधिपति. शक्ती रौद्री स्यात् तत्र सृष्टिसहारे ॥ ११ ॥

हरवर्णयुगलमनयोर्वाचकमर्थोऽत्र रस्य रुद्र स्यात् ।
रुद्राक्षरसम्पर्काद् रौद्री तच्छक्तिरत्र हस्यार्थं ॥ १२ ॥

अत्र तु शक्त्यर्णस्य प्राथम्य शक्तिबीजभूतत्वात् ।
अधिवसत शिवशक्ती सज्ञानाख्या तयोस्तु नित्वमयी ॥ १३ ॥

कामकला कलयित्री तुर्यमयी रक्तशुक्लमिश्रतनु. ।
रक्तो विन्दु शक्ति शुक्ल शम्भुः परस्तदैकात्म्यम् ॥ १४ ॥

एव द्वितीयबीज स्थितिरूप दक्षिणान्वयात्म स्यात् ।
स्थितिसृष्ट्यादिविभेदाद् वसन्ति ता एव देवतास्तत्र ॥ १५ ॥

---

१. मय—ग. । २. त्मात्म—ग. । ३ शोडमूत —ग. । ४. रक्षरा—ग. । ५. महाविद्या—ग. ।
६. सेय सस्यार्थं —ग. । ७. सर्गा—ग. । ८. दास्ता एवात्रापि देवता न्यवसन्—ग. । ९. स्त्यत्र—क.ख. ।

अत्र कलवर्णमध्यस्थितो ह्कार. स्थितिस्वरूपत्वम् ।
अस्य द्योतयति परं स्थितिरूपं[1] सविदम्विकाकार.[2] ॥ १६ ॥
संहारात्मकपश्चिमसमयमये[3] तद्वदेव तार्तीये[4] ।
संहृतिसृष्ट्यादिवशाद्[5] वसन्ति ता एव देवतास्तत्र[6] ॥ १७ ॥
सृष्टौ शक्तेर्नियतप्राधान्यादस्य शक्तिवीजत्वात् ।
स्वात्मनि[7] संहृतिसृष्टौ शिवमन्तर्भाव्य भासते[8] शक्तिः ॥ १८ ॥
त्रिमये तुरीयवीजेऽनाख्यारूपोत्तरान्वयात्मनि तौ ।
शक्तिशिवावधिवसतो निरन्तरं सामरस्यमापन्नौ ॥ १९ ॥
सृष्ट्यादिभेदभिन्नश्रीविद्यावर्णयुगल[9]नवकात्मा ।
नवनादवर्गरूपा माता सा मध्यमा[10]ऽभिधा वितता ॥ २० ॥
शब्दस्पर्शौ रूपं रसगन्धौ चेति भूतसूक्ष्माणि ।
व्याप्यव्यापकभावात् पञ्चदश स्यु. क्रमेण तत्संख्या. ॥ २१ ॥
तिथयश्च कला[11] नित्यास्वदात्मिकाः स्युस्तथैव तत्सख्यै. ।
वर्णै. समष्टिरेषा विद्या व्याप्नोति तानि सर्वाणि ॥ २२ ॥
सर्गादिसमष्टि[12]रूप. स्वांशै[13]रेभिस्तदात्मना वितत: ।
सर्गेण कादिवर्णैरपि षट्त्रिंशद्भिरात्मनोऽवयवैः ॥ २३ ॥
पुनरज्न्यञ्जनविन्दुप्रभेद[14]भिन्नास्तदक्षरावयवान् ।
षट्त्रिंशत्संख्याकास्तत्त्वमयानश्नुते हि सा माता ॥ २४ ॥
व्यष्टिसमष्टिविभेदैश्चतुरात्मा तत्त्ववीजपीठमयी ।
चतुरन्वया[15]त्मनाऽपि च मातास्ऽष्टकमातृकामयी विद्या ॥ २५ ॥

इति[16] श्रीमत्पुण्यानन्दशिष्यामृतानन्दयोगिप्रवरविरचिते
सौभाग्यसुधोदये द्वितीयः प्रपञ्चः ॥

---

१. ध्वनिरूप'–ग. । २. दम्बरा–ग. । ३. समये–दी. । ४. तार्तीयम्–दी. । ५. वशातु सन्ति–दी. । ६. स्त्वत्र–क. ख. ग. । ७. स्वात्मा–ग. । ८. विभासते–दी. । ९. युगम–ग. । १०. मा मता–ग. । ११. तियय कलाश्च–ग. । १२. सर्गः समष्टि–ग. । १३. स्वरैस्त्रिभि –ग. । १४. प्रभेदनोदक्षरावयवान्–ग. । १५. चतुरक्षरा–ग. । १६. इति द्वितीय प्रपञ्च –क. ख. ।

अस्याम्बिकाशमूता शक्तिः (सा से[1]स्वाशे)न शान्तया साकम् ।
समरसभावं याता जाता ज्योतिर्मयी महाबिन्दुः ॥ १ ॥
सैव स्वेच्छोद्रेकाद् वामा (प[1]व)मनादमुष्य विश्वस्य ।
[2]वक्रीकृतनिजरूपा [3]सृष्टिः शृङ्गाटवामरेखा स्यात् ॥ २॥
ज्येष्ठा ज्ञानावेशादृज्वी स्थितिरेतदग्ररेखा[4] स्यात् ।
रौद्री क्रियोपरागात् संहृतिरेतस्य दक्षिणा रेखा ॥ ३ ॥
इत्थमिय पश्यन्ती जाता[5] माता त्रिकोणरूपेण ।
साऽपि चतुर्बीजवती विद्या वेद्या तदात्मिका तद्वत् ॥ ४ ॥
वामा(दि[1]दी)च्छाद्यष्टप्रतिबिम्बैरष्टकोणमुत्पन्नम् ।
अष्टत्रिकोणमध्यस्पन्दैर्दशभिर्दशारमु[6]त्पन्नम् ॥ ५ ॥
अस्यैव प्रतिबिम्बं बाह्यदशारं च भासमानस्य ।
स्पन्दवशादेवैषा चक्राणा समुदितं च मनुकोणम् ॥ ६ ॥
द्व्युत्तरचत्वारिंशद्योनिगणो[7] मध्ययोनिपर्यन्तम् ।
नादमयैर्नववर्गैर्मध्यमया तावदक्षरैर्व्याप्तिः[8] ॥ ७ ॥
विद्याशमयै[9]. स्वार्णै. काद्यैर्वर्गैः स्वरै[10]श्च षोडशभि ।
अष्टद्व्यष्टदलाम्बुजयुगलं व्याप्नोति वैखरी देवी ॥ ८ ॥
बीजत्रयमयतेजस्त्रितयविकाराश्च तानि वृत्तानि ।
भूबिम्बत्रयमेतत् पश्यन्त्यादित्रिमातृविश्रान्तिः ॥ ९ ॥
चतुरश्रषोडशाष्टच्छेदात्मक[11]चक्रत्रयं त्रिधा सृष्टिः ।
पूर्वाम्नायो वाग्भवबीजं तद्वत्[12] त्रिमूर्तिदैवत्यम् ॥ १० ॥

---

१. बलेरशेन–ग. । २. चक्री–ख. ख. । ३. सृष्टि–क. ख. । ४. तासोत–ग. । ५. माला भाग–ग. । ६. मध्यामीन्–ग. । ७. गणा–क. ख. । ८. ध्याप्तम्–ख. ख. । ९. यस्यार्णे–ग. । १०. 'स्वरै' नास्ति–क. ख. । ११. 'च्छदात्मक' नास्ति–ग. । १२. तद्वि–क. ख. ।

मनुकोण द्विदशार त्रितयमिद कामराजवीजं स्यात् ।
स्थितिरत्र देवताना त्रयमपि तद्वच्च दक्षिणाम्नाय ॥ ११ ॥

अष्टत्रिकोणमध्यत्रितय तार्तीयमेष[१] सहार. ।
[२]अत्रापि देवतात्रयमासीदयमेव पश्चिमाम्नाय. ॥ १२ ॥

सर्वमनाख्यारूपं तुर्यं[३] शिवशक्तिदेवताधिकृतम् ।
स्यादुत्तरसमयात्मकमेव स्रोतोमय महाचक्रम् ॥ १३ ॥

[४]इति श्रीमत्पुण्यानन्द( शिष्यामृतानन्दयोगिप्रवरविरचिते )
सौभाग्यसुधोदये तृतीय. प्रपञ्च ॥

---

[1]चित्तमये श्रीपीठे ज्योतिर्विन्दौ यदस्य सक्रान्तम् ।
[५]प्रतिबिम्ब परधाम्न. परलिङ्ग [६]तत्प्रकीर्त्यते प्राज्ञै ॥ १ ॥

तत्र परा परमेशी प्रकाशशक्त्यात्म(का?कौ) निजावशौ ।
निर्भिद्य नित्ययोगात् काम. कामेश्वरीत्यभून्मिथुनम् ॥ २ ॥

[७]सर्वं स्वस्वात्मतया [2]कामो देव [८]प्रकाम्यमानत्वात् ।
[3]वक्त्राद्यास्तस्याशा वाराद्य [९]वर्णित बुधैराद्यै ॥ ३ ॥

परमात्मिका तदीया स्वेच्छाशक्तिर्बभूव कामेशी ।
इच्छादिकास्तदीया मूर्धादिशा मनीषिभि कथिता ॥ ४ ॥

अनयोरात्मावय(ता?व)व्याससमासैकरस्यभेदवपु ।
पश्यन्ती मातेय न तत्त्वतो भिद्यते ततस्ताभ्याम् ॥ ५ ॥

---

१. मेव–क ख । २. तत्रापि–क. ख. । ३. रावयान्वादिक–क. ख. । ४. इति तृतीय प्रपञ्च –क. ख. । ५. प्रतिफलित–क. ख. दी. । ६ तत्र–ग. । ७. सर्वऽस्य–ग. । ८. स–ग., स काम्यत्वात्–दी. । ९. वर्णिता–क. ख. ।

1. योगिनीहृदयदीपिकाया ( पृ० ६१ ) समुद्धृतमेतत्पद्यम् ।
2 योगिनीहृदयदीपिकाया (पृ २६३) समृद्धत एष पद्यांश ।
3 "वामाद्यास्तस्याशा वक्त्राद्या वर्णिता बुधैराद्यै " इति पाठ समुचितः प्रतिभाति ।

अस्याम्बिकांशभूता शक्ति[1] (सा सेऽस्वांशे)न शान्तया साकम् ।
समरसभावं याता जाता ज्योतिर्मयी महाविन्दुः ॥ १ ॥
सैव स्वेच्छोद्रेकाद् वामा (प१व)मनादमुष्य विश्वस्य ।
वक्री[2]कृतनिजरूपा सृष्टि[3]: शृङ्गाटवामरेखा स्यात् ॥ २॥
ज्येष्ठा ज्ञानावेशादृज्वी स्थितिरेतदग्ररेखा स्यात् ।
रौद्री क्रियोपरागात् संहृतिरेतस्य दक्षिणा रेखा ॥ ३ ॥
इत्थमियं पश्यन्ती जाता[4] माता त्रिकोणरूपेण ।
साऽपि चतुर्बीजवती विद्या वेद्या तदात्मिका तद्वत् ॥ ४ ॥
वामा(दि१दी)न्छाद्यष्टप्रतिबिम्बैरष्टकोणमुत्पन्नम् ।
अष्टत्रिकोणमध्यस्पन्दैर्दशभिर्दशार[6]मुत्पन्नम् ॥ ५ ॥
अस्यैव प्रतिबिम्बं बाह्यदशारं च भासमानस्य ।
स्पन्दवशादेवैषा चक्राणां समुदितं च मनुकोणम् ॥ ६ ॥
द्व्युत्तरचत्वारिंशद्योनिर्गणो[7] मध्ययोनिपर्यन्तम् ।
नादमयैर्नववर्गैर्मध्यमया तावदक्षरैर्व्याप्तिः ॥ ७ ॥
विद्यासमयै[9]: स्वार्णै: काद्यैर्वर्गै: स्वरै[10]श्च षोडशभि: ।
अष्टद्व्यष्टदलाम्बुजयुगलं व्याप्नोति वैखरी देवी ॥ ८ ॥
बीजत्रयमयतेजस्त्रितयविकाराश्च तानि वृत्तानि ।
भूबिम्बत्रयमेतत् पश्यन्त्यादित्रिमातृविश्रान्ति: ॥ ९ ॥
चतुरश्रषोडशाष्टच्छेदा[11]त्मकचक्रत्रयं त्रिधा सृष्टिः ।
पूर्वाम्नायो वाग्भवबीजं तद्वत्[12] त्रिमूर्तिदैवत्यम् ॥ १० ॥

---

१. क्तेरंसोन–ग. । २. चक्री–क. ख. । ३. सृष्टि–क. ख. । ४. खासीत–ग. । ५. माता जाता–ग. । ६. मध्यासीन्–ग. । ७. गणा–क. ख. । ८. ध्यप्तिम्–च. ख. । ९. यस्वार्ण–ग. । १०. 'स्वरै' नास्ति–क. ख. । ११. 'च्छेदात्मक' नास्ति–ग. । १२. तद्धि–क. ख. ।

मनुकोणं द्विदशारं त्रितयमिदं कामराजबीजं स्यात् ।
स्थितिरत्र देवताना त्रयमपि तद्वच्च दक्षिणाम्नाय. ॥ ११ ॥

अष्टत्रिकोणमध्यत्रितयं तार्तीयमेप[1] सहार. ।
अत्रापि[2] देवतात्रयमासीदयमेव पश्चिमाम्नाय. ॥ १२ ॥

सर्वमनाख्यारूपं तुर्यं शिवशक्तिदेवताधिकृतम् ।
स्याद्वृत्तरसमयात्मकमेव[3] स्रोतोमय महाचक्रम् ॥ १३ ॥

इति[4] श्रीमत्पुण्यानन्द( शिष्यामृतानन्दयोगिप्रवरविरचिते )
सौभाग्यसुधोदये तृतीयः प्रपञ्च. ॥

---

[1]चित्तमये श्रीपीठे ज्योतिर्बिन्दौ यदस्य सङ्क्रान्तम् ।
प्रतिबिम्बं[5] परधाम्नः परलिङ्गं तत्प्रकीर्त्यते[6] प्राज्ञै. ॥ १ ॥

तत्र परा परमेशी प्रकाशशक्त्यात्म(का?कौ) निजावशौ ।
निर्भिद्य नित्ययोगात् काम. कामेश्वरीत्यभून्मिथुनम् ॥ २ ॥

सर्वैं[7] स्वस्वात्मतया [2]कामो देव. प्रकाम्यमानत्वात्[8] ।
[3]वक्त्राद्यास्तस्याशा वाराद्य वर्णित[9] बुधैराद्यै: ॥ ३ ॥

परमात्मिका तदीया स्वेच्छाशक्तिर्बभूव कामेशी ।
इच्छादिकास्तदीया मूर्धावशा मनीपिभि. कथिता ॥ ४ ॥

अनयो रात्मावय(त्रि?व)न्यासससमासैकरस्यभेदवपुः ।
पश्यन्ती मातेय न तत्त्वतो भिद्यते ततस्ताभ्याम् ॥ ५ ॥

---

१. मेव—क. ख । २. तत्रापि—क. ख. । ३. रान्वयान्वादिक—क. ख. । ४. इति तृतीयः प्रपञ्च—क. ख. । ५. प्रतिफलित—क. ख. दी. । ६ तत्र—ग. । ७. सर्वेऽस्य—ग. । ८. स—ग., स काम्यत्वात्—दी. । ९. वर्णिता—क. ख. ।

1. योगिनीहृदयदीपिकाया ( पृ० ६१ ) समुद्धृतमेतत्पद्यम् ।
2 योगिनीहृदयदीपिकाया (पृ २६३) समृद्धत एव पद्याश ।
3 ''वामाद्यास्तस्याशा वक्त्राद्या वर्णिता बुधैराद्यैः." इति पाठः समुचितः प्रतिभाति ।

सो[1] च चतुरक्षरात्मा तदश(पूःभू)नानि तानि मिथुनानि ।
चत्वारि वेदयन्ति विद्या वेद्या तदात्मिका विबुधे. ॥ ६ ॥
आधारनवकमनयोर्मूलादिब्रह्मरन्ध्रपर्यन्तम् ।
नव[2]नादवर्गरूपा माता व्याप्नोति मध्यमा देवी ॥ ७ ॥
सृष्ट्यादित्रयभेदैर्नवभिर्भिन्नार्णयुग्मनवकव(ति?ती) ।
नवचक्ररूपिणी सा विद्या व्याप्नोति तद्वदाधारा(त्?न्) ॥ ८ ॥
पट्त्रिंशत्तत्त्वमय शरीरमनयोर्निजेच्छयोपात्तम् ।
ह[3]न्ताद्यविद्ययाऽपि व्याप्तं तावत् प्रकारभिन्नाभ्याम् ॥ ९ ॥
एकत्रिंशत्रितयद्वि[4]तयसमष्टिप्रकारसकलिते. ।
तत्त्वे. स्वा[5]वयवमयैश्चतुर्भिरनयोस्तथान्वया व्याप्ता. ॥ १० ॥

इति चतुर्थ प्रपञ्च ॥

---

श्रीपीठशैलशिखरे परशिव[6]भानो प्रकाशमानस्य ।
निजशक्तिरश्मिनिकरश्च[7]क्रमदेवतात्वमायात ॥ १ ॥
[1]मध्यत्रिकोणको[8]णे वामे श्रीपूर्णपीठमेतस्मिन् ।
वुद्धिमये परतेज प्रतिफलित त्वितरलिङ्गता यातम् ॥ २ ॥
रौद्र स्यादोड्डीश क्रियैव भगमालिनी तयोर्मिथुनम् ।
रुद्रस्व[9]शक्तिरूप तृतीयवीजात्मक त(द)व्याप्ते ॥ ३ ॥
[2]दक्षिणकोणेऽहङ्कृतिरूपे जालन्धरे तु सक्रान्तम् ।
परधाम वाणलिङ्ग जा[10]त सक्रान्त्युपाधिभे[11]दवशात् ॥ ४ ॥

---

१. सा चतुरक्षरा वा–क. ख. । २. नाय–क ख । ३ हन्तायं–ख., हतयाद्य–ग. । ४. 'द्वितय' नास्ति–ग. । ५. स्वावयवात्–क. ख. । ६. शिवधाम्न –क. ख । ७. श्चक्र–ग. । ८. 'कोणे' नास्ति–ग. । ९. स्व–क. ख. । १०. तत्सक्रान्तद्युति–क. ख. । ११. च्छेद–क. ।

1 दीपिकाया ( पृ ६१ ) समुद्धृतमेतत्पद्यम् ।

2 दीपिकायां ( पृ० ६१ ) दृश्यते श्लोक एष ।

ज्येष्ठांशः षष्ठीशः ज्ञाना वज्रेश्वरी तयोर्मिथुनम् ।
विष्णुविश्वम्भरात्मकमस्मिन्नधिवसति मध्यबीजमयम् ॥ ५ ॥

[1]पुनरेव कामपीठे तदग्रकोणे स्थिते मनोरूपे ।
प्रतिफलितं तज्ज्योतिः स्वयम्भुलिङ्गं समीरितं[1] सद्भिः ॥ ६ ॥

वामांशो मित्रेशः[2] कामेशीच्छा तयोर्मिथुनम्[3] ।
ब्रह्मब्राह्मीरूपं वाग्भवबीजात्मकं वसत्यस्मिन् ॥ ७ ॥

इत्थं वामाद्यंशैर्वागादिकबीजवाच्यतां यातैः ।
वामादियुगलरूपा जाता सा मातृकैव पश्यन्ती ॥ ८ ॥

वसुयोनिष्वदसीयं पुर्यष्टकमष्टदेवताकारम् ।
अन्तर्दशारचक्रे सर्वज्ञाद्यास्तदक्षसचाराः[4] ॥ ९ ॥

स्युः सर्वसिद्धिदाद्यास्तदक्षविषया बहिर्दशारगताः ।
मनुकोणशक्तिनिकर. करणचतुर्दशकमेव तदीयमभूत् ॥ १० ॥

द्व्युत्तरचत्वारिंशद्योनिगतो देवतानिकायोऽयम् ।
मध्यमया नववर्गैर्विद्यार्णयुगात्मकैरभिव्याप्तः ॥ ११ ॥

अष्टकमनयोरिष्टं प्रकृतीनामष्टपत्रशक्तितया ।
एतद्विकारजातं संजातं[5] नृपपत्रदेवताकारम् ॥ १२ ॥

अणिमादिगुणनिकायस्तयोस्तयोरेव[6] धातुसमुदायः ।
मुद्रामयी च सा[7] वै चतुरश्रत्रयमये[8] वसत्यस्मिन् ॥ १३ ॥

द्विरदकलादलकमलद्वितयगतं[9] शक्तिरश्मिचक्रमिदम् ।
विद्यात्मकैः स्वकीयैर्वर्णैर्व्याप्नोति वैखरी माता ॥ १४ ॥

---

१. समीहितं–दी. । २. मित्रीश.–ग. । ३. तयोरिद युग्मम्–ग. । ४. दंश श्रमे–ग. । ५. नववसुपत्राब्जदे–क, ख. । ६. स्तनयोरेव–क. ख. । ७. सदपि–ग. । ८. त्रितयमधि–ग. ९. ले द्वितीयमिदं–क, ख. ।

1. दीपिकायां ( पृ० ६१ ) समुद्धृतमेतत्पद्यम् ।

आधारनवकमनयोर्नवचक्रीभावमागतं शिवयोः ।
तन्मध्यचारचतुरा मुद्रात्व प्राप मोदनात् सवित् ॥ १५ ॥

तन्नादशक्तिनवकं नवचक्रेशीस्वरूपमापन्नम् ।
विद्यार्णयुग्मनवक तद्विद्यानवकरूपतो वितत॒म् ॥ १६ ॥

नवचक्रवासिनीना भासा प्रकटादियोगिनीना च ।
तासामिव चक्राणा चतुराम्नायादिरूपता ज्ञेया ॥ १७ ॥

इति पञ्चमः पटलः ॥

---

तदनादिबोधरूपं परमानन्दात्मक पर ज्योतिः ।
स्फुरति यदा स्वात्मान विमृष्ट विद्ययाऽन्यार्ऽभिलपेत् ॥ १ ॥

तदनुत्तरस्फुरत्ताकार(ः) स्वात्मीयतत्त्वविम्रष्टा ।
परमशिवो गुरुराद्यश्चर्यानाथापराभिधानधर. ॥ २ ॥

विद्याना सर्वासा भिन्नस्रोत.परम्पराकाणाम् ।
वारिधिवर इव सरिता पुण्यतमो भवति यत्र समेद. ॥ ३ ॥

भिन्न. स एव यातः कामे(श१शी)त्व विमर्शभागेन ।
शक्ति. साऽस्य निरङ्कुशविभव वेलेव वारिधि रुन्धे ॥ ४ ॥

कृतयुगसमये विद्यामाद्यामस्यै विमर्शरूपिण्यै ।
ओड्याणपीठनिलयश्चर्यानाथोऽधिदेव(ते१तै)वेश. ॥ ५ ॥

एतन्निरोधजन्या मुक्तिर्जन्तो स एव ससारः ।
संसारस्य च मुक्तेः सरणि शरणं प्रयामि तच्चरणम् ॥ ६ ॥

---

१. रूपनवकलाविदितम्–क. ख. । २. विद्ययाऽभिलपत्–क. ख. । ३. समृष्टा–क. ख ।
४. परा–क. ख. । ५. इति–ग. । ६. कामेश्वरीत्व–ग. । ७. भेदेन–क. ख. । ८. विमया–ग. ।
९. ओड्कार–ग. । १०. नाथादिदेवदेवेशम्–ग. । ११. मुक्तिर्मुक्ति–ग. ।

सेयं स्वौघैर्भिन्नान् गुरून् गुणैः [1]षष्ठमित्रसंज्ञादीन्[2] ।
अन्वग्रहीदमी(षा?षां) ज्येष्ठो ज्येष्ठौलिहेतुरोड्डीशः ॥ ७ ॥
क्रोधमुनिश्चिद्रूपस्त्रेतायुगनायकोऽन्त्यबीजपतिः ।
सत्त्वतनुर्भंग[3]मालाभर्ता श्री[4]पूर्णशैलपीठगतः ॥ ८ ॥
सुब्रह्मण्यो मध्यः षष्ठीशो [5]मध्यमौलिकर्ता च ।
प्राणात्मा वज्रेशीनाथ(:) श्रीकामराजबीजपतिः ॥ ९ ॥
जालन्धरपीठस्थो द्वापरयुगनायको रजोरूपः ।
श्रीकण्ठो [6]मित्रेशो [7]ना(थं?थः) कामेश्वरीमनःकान्तः ॥ १० ॥
श्रीकामरूपनिलयो [8]विषयमयो वाग्भवाक्षराधिपतिः ।
बालो बालौलिकरः कलियुगकाल[9]प्रभुस्तमोमूर्तिः ॥ ११ ॥
[10]नाथैरेभिः परज्योतिपरिस्पन्दः प्रपञ्चपरमार्थः ।
दिव्यौघोऽयं [11]कथितः सेव्यः श्रीवामकेश्वरीदेव्याः ॥ १२ ॥
[12]मित्रेशनाथमात्रे कलियुगस(न्धा?न्धौ) निलीय निवसन्तीम् ।
विद्यामाद्यामेनां लोपामुद्रा युगादितः प्रापत् ॥ १३ ॥
यदनन्यलब्धपूर्वा[13] विद्यामेषा युगादितो लेभे[14] ।
[15]तत्तन्नाम्ना प्रथितं सन्तानमिदं हि सर्वलोकेषु ॥ १४ ॥
तदनु मुनिः कलशभवस्ताभ्यां [16]कङ्कालतापसाचार्यः ।
तस्माद् धर्माचार्यो लघुनुतिवररचनविदितविज्ञानः ॥ १५ ॥
तस्मादपि योगि(स?व)राद् योगेशी मुक्तकेशिनी नाम ।
नानापदानमहितो दीपकनाथः स्वसन्ततेर्दीपः ॥ १६ ॥

---

१. शेष—ग. । २. कान्—ग. । ३. माया दत्ता—ग. । ४. शैलपूर्ण—क. ख. । ५. मध्यमौलि—ग. । ६. मित्रीशो—ग. । ७. नाथा—ग. । ८. विषम—क. ख. । ९. प्रभूतिराख्यातम्—क. ख. । १०. नादै.—क. ख. । ११. विदितः—क. ख. । १२. मित्रीशः—ग. । १३. वमिनामेषा—क. ख. । १४. लभते—क. ख. । १५. तन्नाम्ना—क. ख. । १६. काल—ग. ।

विद्यामवाप तस्या योगिन्या [1]विमलबोधभागिन्या ।
एते [2]शिवाशभूते. सिद्धौघ( ) पड्भिरीरितो गुरुभि. ॥ १७ ॥
दीपकनाथस्य सुतो विद्या तस्मादवाप जिष्ण्वाख्य ।
अथ मातृगुप्तदेवस्तस्मादस्माच [3]तेजसो देव ॥ १८ ॥
तस्मान्[4]मनोजदेवस्ततोऽपि कल्याणनाथयोगिवर ।
तस्मात् परमानन्द स्वात्मानन्दस्ततो महायोगी ॥ १९ ॥
तदनु त्रिलोचनेशो दक्षिणसन्तान[5]सिद्धिसन्तान ।
एतस्माद् देवेशो [6]मारिजबाधाख्यविपयविदितयशा ॥ २० ॥
तस्माच्च केशवेशस्त्रिलोचने[7]शोपराभिधान(प?ध)रः ।
तस्मात् पुण्यानन्दो ([8]माम?ममा)मृतानन्दयोगिनो नाथ. ॥ २१ ॥
[9]भानुक(सुमा?शुभा)वसान सन्तान स्वीय[10]मात्मनो ज्ञात्वा ।
सम्प्रति [11]सन्ततियोजित[12]जननादहमस्मि पञ्चम पुरुप. ॥ २२ ॥
[13]एतैर्नाथैरुदितो मानौघो मानवोत्तमैरर्च्य ।
सर्वेपा तु गुरूणा [14]गोप्य तत्पूज्यनाम [15]सामयिकम् ॥ २३ ॥
गुरुव[16]क्त्रमात्रगम्य न पुस्तके लोक[17]नामवल्लेख्यम् ।
एतेपामोघा[18]नामिव गाङ्गाना तमो(व?प)ह त्रितयम् ॥ २४ ॥
वागादित्रितयमय [19]वन्द्य विद्यावतारसोपानम् ।
एतत्त्रितयसमष्टि श्रीगुरुनाथस्य पादुकात्रितयम् ॥ २५ ॥

---

१. मङ्गलाकृते श्रमत –क ख. । २. शिवाङ्ग–ग । ३. तेजदेवाख्य –ग । ४. ज्ञनायस्तस्मात–क. ख. । ५ सिधु–ग. । ६. वारिववायव्य–क. ख. । ७. शो धराभिधानधरः–ग. । ८. महा–क. ख. । ९. भानुङ्–क ख. । १०. मामना–ग. । ११. सन्तत–ग. । १२. सन्ततिरह्–ग. । १३. नार्देर्विदितो–क ख. । १४. योग्य यत्–ग. । १५. धामैक–ग. । १६. वज्रादव–क. ख. । १७ नाय–क. ख. । १८. ना नवरङ्गाना–क. ख । १९ वेद्य–क. ख. ।

(शि?सि)तशोणमि[1]श्ररूपं तुर्यं वागादिमयतया वेद्यम् ।
नि[2]व(स)ति सहस्रप(ति?त्रे) सरोरु(हो?हे) नाथपादुकारूपम् ॥ २६ ॥

सुभगत्वसुधारसोदयाय स्वगु(रु?)रूपायविशेषशेषभाजः ।
निजमानसमन्दरादमथ्नादमृतानन्दसुधीरयुग्मसि[3]न्धुम् ॥ २७ ॥

[4]इति श्रीमत्पुण्यानन्दशिष्यामृतानन्दयोगिप्रवरविरचिते
सौभाग्यसुधोदये षष्ठः प्रपञ्चः ॥

ग्रन्थश्च परिसमाप्तः ॥

---

१. बिन्दु—क. ख. । २. नास्त्येषा पङ्क्तिः—ग. । ३. सिद्धाम्—क. ख. । ४. इत्यमृतानन्दकृते—क. ख. ।

# चिद्विलासस्तवः

## अमृतानन्दयोगिविरचितः

[1]स्वप्रकाशशिवमूर्तिरेकिका तद्विमर्शतनुरेकिका तयोः ।
सामरस्यवपु[१]रिष्यते परा पादुका परशिवात्मनो गुरोः[२] ॥ १ ॥
चित्रभानुशशिभानुपूर्वकै[३]स्त्रि[४]त्रिभेदनियतेषु[५] वस्तुषु ।
तत्तदात्मकतया विमर्शनं तत्समष्टिगुरुपादुकाजपः[६] ॥ २ ॥
तीर्थमद्वयसुधारसोदधे[७]र्वारितं[८] निजविमर्शवेलया ।
आणवादिमलमोचनोचित स्नानमंत्र[९] विधिना निमज्जनम् ॥ ३ ॥
[2]सा[१०] निशा सकललोकमोहनी[११] वासरः स खलु सर्वबोधकः ।
सामरस्यमिह सन्धिरेतयोः श्रीपरैव ननु[१२] सान्ध्यदेवता[१३] ॥ ४ ॥
[3]स्वप्रकाशशिव एव भास्करस्[१४]तद्विमर्शविभवा[१५] मरीचयः ।
यैः[१६] स भासयति वेद्यमण्डलं तस्य पूजनमहन्तया मतिः ॥ ५ ॥
चिद्विलास[१७]मयभित्तिभावितं ज्ञानदीपविगलत्तमोगुणम् ।
आत्मतत्त्वमिह योग[१८]मण्टपं[१९] तस्य[२०] पूजन[२१]विधानमर्चनम् ॥ ६ ॥

---

१. तनु–क. घ. । २. गुण –च. । ३. कै–घ. । ४. त्रित्रिकेण–छ. । ५. निचितेषु–घ. । ६. ड्ढित –ङ. । ७. दधि –घ. ङ ज. । ८. वारिदं–च. । ९. मन्त्र–ग. । १०. या–ग. । ११. मोहिनी–छ. । १२ खलु–ङ. च. । १३ साध्य–घ. । १४. र' स–छ. । १५. विभवो–दी. । १६. यं सहादयति वेद्य–ङ. च., यैस्तया स यदि वेदि–छ. । १७. स्वरकलास्थिमय–ख. ज., स्वप्रकाशमयभित्तिभावित–ग., स्वरूपशास्थिमय–छ. । १८. योग–च. । १९. मण्डपं–ख. घ.छ । २०. तत्र–ग. । २१. मण्डल–ङ., मण्डप–च. ।

1. योगिनीहृदयदीपिकायां १८५, १९५, २३७ पृष्ठेषूद्धृत एष श्लोकः ।
2. चिद्वल्ल्यां ३५ पृष्ठे उद्धृत एष श्लोकार्धः ।
3. योगिनीहृदयदीपिकायां २४९ पृष्ठे उद्धृत श्लोक एष. ।

[1]भेदलक्षणविपक्षसकटात्[१] तारण परमिहात्मरक्षणम् ।
सविदात्मकतया वि[२]मर्शन व[३]न्धन भवति सर्वतो दिशाम् ॥ ७ ॥
वेदि[४]का हृदयपद्मकर्णिका चिन्मयी वसति तत्र देवता ।
यो[५] हि तद्यजनकर्मकर्मठ[६]स्तस्य पाशभिदुर स भैरव ॥ ८ ॥
वि[७]श्वभेदविभवा[८] विकल्पधीलक्षणा[९] भवति विघ्नसन्तति ।
निर्विकल्पनिजधा[१०]मवि[११]श्रमस्तन्निराकरणमत्र कीर्तित[१२]म् ॥ ९ ॥
[2]य[१३]त्र निर्विषयबोधलक्षणे[१४] स्वा[१५]त्मशम्भुरवतिष्ठतेऽनि[१६]शम् ।
तत्त्वजालकमिद शिवावधि क्ष्मा[१७]मुख सकल[१८]मासनं मतम् ॥ १० ॥
[3]आत्मतत्त्वगतयोरशुद्धयोरत्र कर्मकरणात्मनोर्द्वयो ।
शुद्धतत्त्वल[१९]यभावनामयी शुद्धिरात्मकरयो परा मता ॥ ११ ॥
वेद्यसवि[२०]दि इदस्फु[२१]रात्मनो वे[२२]तृसविदि विलापनाम[२३]यी ।
वृत्तिरद्वयविमर्शवि[२४]ग्रहा प्राणसयतिरुदीरितोत्त[२५]मा ॥ १२ ॥
आसनानि नवचक्रसविदामुद्भवस्थितिलया[२६]स्त्रिशस्त्रिश ।
अङ्गषट्करचना षडध्वनामशतावगतिरात्मसंवि[२७]दि. ॥ १३ ॥

---

१. दोद्धारण–ग., दोत्तारण–दी. । २. विचिन्तन–ग. । ३. सर्वतो भवति बन्धनम्–ग. । ४. अम्बिका–ग. । ५. कोऽपि–ग. सोऽपि–घ, योऽपि–ङ. च । ६. ठ सर्व–ग. । ७. चित्त–ग. । ८. भवो–क. ख. घ. ङ. च. छ. ज. । ९. लंक्षणो–क., लक्षणो–ख. घ छ. ज., लक्षण–ग. च । १०. धाम्नि–ग । ११. विश्रमात्–ग. । १२ कीर्तनम्–क. ग. । १३ नित्य–ग । १४. णम्–ङ. दी. । १५. साम्ब–ख. ज. । १६ मृशम्–ङ. च. । १७. क्ष्मात्मक–ग. । १८. मानन–ङ. । १९. मय–ग., गत–च दी. । २०. दमिद–ग. । २१. परात्मन –ग. स्फुटात्तनो–ङ., स्फुटात्मनो–च, स्फुरन्मनो–छ. । २२. वेद्य–ग. । २३. मयि–क., न मयि ग. । २४. लक्षणा–ङ च । २५. त्तरा–छ. । २६. त्रय क्रमात्–घ. । २७. विवि–ग., विदा–घ ङ. च. ।

1 योगिनीहृदयदीपिकायां ९१ पृष्ठे, चिद्वल्ल्या च ६ पृष्ठे उद्धृत एष श्लोकार्ध । क. ख. घ. छ. ज. मातृकासु तु न दृश्यते एष श्लोक ।

2 योगिनीहृदयदीपिकाया ( पृ० १८८ ) दृश्यते श्लोकार्ध एष ।

3 योगिनीहृदयदीपिकाया ९१, २८० पृष्ठयोरुद्धृत एष श्लोक । क. ख. घ. छ. ज. मातृकासु तु न दृश्यते ।

काम ऊर्ध्वगतबिन्दुरानन भानुरेप तदधोगतौ स्तनौ ।
चित्रभानुशशिना[1]वुभौ कला योनिरत्र [2]संपरा[3]र्धकुण्डली ॥ १४ ॥
[4]एवमात्मनि चतुष्कलामये सर्वतत्त्वसमवायलक्षणे ।
न्यासमाहुरिह वैखरीति[5]वाग्[6]वृत्तित. समविशेषभा[7]वनम् ॥ १५ ॥
[8]पूरुपत्वसमवा[9]प्तिहेतुपुर्यष्टकाख्यनिजसूक्ष्मव[10]र्त्मणः ।
[11]चित्पदे लयविधानमष्टवाग्देवता[12]न्यसनमि[13]ष्टमुत्तमम् ॥ १६ ॥
[14]अन्तरङ्ग[15]करणान्युपाधय. स्वप्रकाशन[16]भसोऽत्र सक्रमात् ।
पीठभावमुप[17]यान्ति तानि तन्न्यासकर्म पर[18]धाम्नि [19]हृल्लयः ॥ १७ ॥
तत्त्वधामयुगमातृकात्मक[20]त्रि[21]त्रिभेदनियते[22]पु वस्तुषु ।
[23]पानपात्रपरमामृतन[24]य तुर्यवि[25]श्रमणमर्घ्यशोधनम् ॥ १८ ॥
[1]मेदिनीप्रमुखमाशिव मत तत्त्वचक्रमि[26]ह चक्रमुत्तमम् ।
[27]स्वस्व[28]भावसमवायभासिनी देवता भवति सा[29]विदो कला ॥ १९ ॥
[2]आन्तरस्य निजसविदात्मनो मातु[30]रक्षकरणा[31]ध्वना वहि. ।
मेयसविदि समर्पण [32]तदावाहन समरसत्वलक्षणम् ॥ २० ॥

---

१. वुभे–ग. । २. स हरा–क ख. छ. ज. । ३. ध्य–च. । ४. येन चा–ग. । ५. रादि–क. ख. ग. ड. च. छ. ज. । ६. वृत्तिता–क. ख. ज., कीर्तिरासनमशेपभासनम्–ग., वृत्तिता च सविशेषभासनम्–घ., चित्तता समवशेपभावनम्–ड. च. । ७. भावनाम्–छ. । ८. पौरुपत्व–ग. । ९. वाप–ग. । १०. वप्मणा–ग., वर्त्मनाम्–ड. च. । ११. चित्पथे–च. । १२. न्यसन–क. । १३. जुष्ट–छ. । १४. आन्त–घ. च. । १५. णप्रभावत –छ. । १६. नवसूत्र–छ., नभसाऽत्र–ड. । १७. याति भावित न्यास–ग. । १८. धाम केवलम्–घ. । १९. तत्लय –क. ड. घ., तल्लयात्–ग. । २०. त्मन –ग. । २१. वेण–छ. । २२ तत्त्वलक्षण.–ग , तत्त्वलक्षणम्–ध. ध., मस्वलक्षणम्–ड. । २३. पाद–क. ख. ड घ. छ. ज । अर्घ्य–घ. । २४. त्रय–क., त्रया–ड. । २५. वण–क. ख. ज । २६. मिति–ड. च. । २७. स्वरूप–ड. च. । २८. मयभावनामयी–ग., समवायभासिनी–चि. । २९. सादिनो–छ. । ३०. रत्र–दी. । ३१. त्मनो–घ., त्मना–ड. च. दी. । ३२. सदावा–ग. घ. ड. च ।

1 चिद्वल्ल्यां ( पृ० १४ ) समुद्धृत एव श्लोक. ।
2 योगिनीहृदयदीपिकायां ( पृ० ९३ ) समवलोक्यते श्लोक एव ।

पञ्चधैव[1] यदिदं प्रपञ्चितं पञ्चधाऽनुभवशाश्वतोदयम् ।
तत्[2]सुसं[3]हरणमौपचारिकं कर्म निर्मलनिजा[4]त्मसंविदि ॥ २१ ॥
यस्तु[5] पञ्चदशधा प्रकल्प्यते[6] काल एष[7] शशि[8]भानुसंक्रमात् ।
तस्य शाश्वतपदे[9] लयक्रिया[10] नित्यवासर[11]कलार्चनं[12] मतम् ॥ २२ ॥
बाह्यचक्रमुपगा[13] मरीचयस्तत्त्वजाल[14]लसदात्मसंविदः[15] ।
तत्समर्चनमतीव[16] चिन्मयानाख्य[17]धाम्नि विलय[18]क्रमक्रिया ॥ २३ ॥
यच्चतुर्विधमिदं विभासते तत्त्वरूपममृतान्तराकृति[19] ।
तस्य पञ्चमपदे[20] लयक्रिया[21] संमतं[22] बलिचतुष्टयं तथा[23] ॥ २४ ॥
पञ्चधा प्रसरतश्चिदात्मनो[24] ह्यान्तरस्य[25] बहिरिन्द्रिया[26]ध्वना[27] ।
सामरस्यमिह संविदात्मनारा(त्रिर्ति)कं परमिदं समीरितम् ॥ २५ ॥
वाक् सहैव मनसा निवर्ततेऽप्राप्य[28] निष्कलनिरञ्जनाद्[29] यतः ।
तत्र[30] निर्मनसि शब्दवर्जिते धाम्नि विश्रमणमुत्तमो[31] जपः ॥ २६ ॥
बिम्बितं स्फुरति यत्र संविदो[32] रूपमान्तरमिदन्तया बहिः ।
विश्वमेतदखिलं चराचरं दर्पणं हृदयदर्पणं परम्[33] ॥ २७ ॥
छादयन्निखिल[34]मात्मसंविदा[35] त्रायते त्रिविध[36]तापसंकटात् ।
यच्चिदम्बरगतं[37] शिवात्मकं[38] छत्रमत्र कमलं सुधामलम्[39] ॥ २८ ॥

---

१. पञ्चता–क. ख. ङ. ज., यश्चिता–घ. च. । २. तस्य–ग., तत्र–ङ. च. । ३. संस्म–घ. । ४. निहा–ग. । ५. यत्तु–ग. । ६. प्रकीर्त्यते–ग. घ. ङ. च. । ७. एव–घ. ङ. च. । ८. शिव–घ. शिश–ङ. । ९. विश्रुत–घ. । १०. क्रमात्–ङ. । ११. सन–घ. । १२. च निमितम्–घ. । १३. पयगा–ग. । १४. जालक–ग. । १५. सविदि–ङ. । १६. मनीत–क. ख. छ. ज., मिदन्तया मया–ग. । १७. भिरय–घ. । १८. क्रिया–ग. । १९. हगन्–घ., पहृत्–ङ. च. । २०. शाश्वत–ग., पश्चिम–च. । २१. समर्पणं–ङ. घ. । २२. सम्मतं–ङ. छ., चिन्तितं–ग. । २३. मतम्–ग. । २४. त्मनस्था–च. । २५. बाह्यान्तश्च–ग. । २६. बहिरप्यना ततः–ङ. च. । २७. त्मनः–ग., त्मना–घ. । २८. स्याप्य–ग., प्राप्य–घ. ङ. च. । २९. मोधनः–ग. । ३०. तस्य–ग., अत्र–ग. । ३१. मोत्तमम्–ग. ङ. । ३२. संविदा–ग. छ. । ३३. मतम्–ङ. च. । ३४. खलित–ग., अमित–ङ. । ३५. दशा–ग. । ३६. निर्मल–क. ख. छ., विविध–ज. । ३७. तत्त्व–घ. । ३८. शिवा–ङ. च. । ३९. मयम्–ग. ङ. च. ।

